ङ्ग इत्यर्थः । अविद्याया एकतस्स्वच्छत्वमङ्गीकृत्य नियमभङ्गमाशङ्कते ॥ नन्वित्यादि ॥ तद् दूषयन्ति ॥ नेत्यादि । तथाच प्रभायामेवाकाशो दृश्यत इति प्रतीतेश्च नायमभिमानः, किन्तु प्रतिबिम्ब एवेतिशङ्कायां तद्विहाय वृत्तिविचारेण दूषणान्तरमाहुः । किञ्चेत्यादि ॥ वस्तुतस्त्ववकाशोऽपि प्रभासहित एव प्रतिबिम्बत इति स्वरूपसम्बन्धाविशेषेण रूपसत्ताया एव तत्र प्रयोजकत्वमिति भावः ॥ तथा प्रतीतेरिति ॥ प्रतिबिम्बितत्वप्रतीतेः ॥ प्रतिबिम्बादिति ॥ तादृशप्रभायामसंयुक्तांशस्याशक्यवचनत्वात् संयोगेन वृत्तिर्नबिम्बे प्रयोजिका, किन्तु व्याप्यवृत्तित्वमेव तथेति संयोगस्याव्याप्यवृत्तित्वेन प्रभाया अपि तथात्वेन प्रतिबिम्बादित्यर्थः । एवञ्च तस्यागुणत्वपक्षेऽपि गुणसत्त्वे द्रव्यसत्त्वस्य नियामकत्वात् तत्रापि किरणसत्त्वेन तत्संयोगस्यापि सत्त्वात् प्रभायाश्च रूपत्वेन किरणव्याप्यवृत्तिसंयुक्तसमवायेन वृत्तिरिति तत्रापि संयोगस्यैव प्रयोजकतेतिज्ञेयम् । तथाच व्याप्यवृत्तिरेव प्रतिबिम्बाप्रयोजिकेति न संयोगेन वृत्तिरिति भावः । ननु गुणाद्वाऽऽलोकवदिति सूत्रे तस्या द्रव्याधिकदेशवृत्तित्वाङ्गीकाराद् द्रव्यसंयोगस्य तत्राभावेन स्वरूपासंव्याप्यवृत्तित्वमपि नाप्रतिबिम्बे प्रयोजकं, किन्तु तद्वृत्तित्वे सति तत्स्वच्छापादकत्वमेव तथेति प्रकृते तदभावान्न दोष इत्याशङ्कायां दूषणान्तरमाहुः ॥ किञ्च द्वा इत्यादि॥ स्थितिरिति ॥ इतरेतरविलक्षणा स्थितिः । तथाचाद्यायां श्रुतौ छित्वादेरेकतूष्णीकत्वापरक्रिययोः कथनाद् द्वितीयस्यां छायातपोक्तावपि व्यासेनात्मनाविति निर्णीतत्वाद् द्वयोः प्रवेशस्योक्तत्वात् तेषां विरोधो दुर्वार इत्यर्थः ॥

यत्तु नीरूपस्य प्रतिबिम्बे रूपं रूपं प्रतिरूपो बभूवेति श्रुतिरेव मानमिति कश्चित्तन्न । ब्राह्मणोपक्रमे सर्वात्मकत्वप्रतिपादनोत्तरं, पुरश्चक्र इति मन्त्रेण पूःकरणप्रवेशयोरुक्तत्वात् तेन प्राप्तस्य भेदस्य निवारणायैतन्मन्त्रस्य प्रवृत्तत्वेनायं वै हरय इत्यादिना विवृतत्वेन चात्र, रूपं रूपं रूपयित्वा रूपयित्वा प्रतिरूपः प्रतिपुस्तकन्यायेन मूलरूपो बभूवेत्यर्थस्य विवक्षिततया, तस्याः प्रतिबिम्बबोधकत्वे मानाभावात् ॥

नाप्येकधा बहुधेति श्रुतिबलात् प्रतिबिम्बो वक्तुं युक्तः । तत्र चन्द्रदृष्टान्तेनांशप्रवेशद्वारा तस्य विवक्षितत्वेन रूपवत्तायामेव त-

स्याभिप्रेतत्वात् । त्वया तदनङ्गीकारात् । तस्य ब्रह्मप्रकरणस्थत्वेन ब्रह्मनानाप्रतीतावेव दार्ष्टान्तपर्यवसानाच्च । एवं, जीवेशावाभासेन करोतीत्यत्रापि ज्ञेयम् । तस्य कार्यजीवेश्वरपरत्वाद्वा । जीवो जीवं विहाय मां, जीवो जीवेन निर्मुक्त इत्येकादेशे कार्यजीवस्यापि स्वीकारात् । हिरण्यगर्भादीनां कार्येश्वरत्वाच्च । अतस्ता अप्यादाय न भवदभिमतजीवस्वरूपस्य सिद्धिरित्यर्थः । नन्वविद्याया अघटितघटनापटीयःस्वभावत्वाद् बिम्बप्रतिबिम्बरूपयोः परमात्मजीवयोरेकत्र स्थितिरपि नानुपपन्नेति शङ्कायां दूषणद्वयमन्यदाहुः ॥ अपरं चे-त्यादि॥जीवस्येत्यादि च ॥ अघटितघटनापटुत्वेऽपि मोक्षजीवस्वरूपयोः साधुत्वसत्त्वादत्र सामर्थ्यस्य कल्पनाविरुद्धेनानुद्धार्यत्वात्ता-दृशस्वभावाङ्गीकारेऽपि न भवदभीष्टसिद्धिरित्यर्थः । एवं तन्मतं दूषयित्वा तस्यासुरत्वबोधनाय पूर्वोक्तदूषणाभ्यामापद्यमानं दूषणान्तरं व्युत्पादयन्ति च ॥ तथा सतीत्यादि ॥ तथाहीत्यारभ्योच्छि-द्येतेत्यन्तम् । ननु कर्मफलदोषदर्शनात् प्रवृत्तिरितिचेत् तत्राहुः ॥ तूष्णीमित्यादि ॥ तथाच संसारहेतुत्वेनैहिक्याः स्वरूपहानिहेतुत्वेना-ऽन्या इत्येवं द्वयोरपि फलदोषं पश्यन्न किञ्चित् कुर्यादिति सर्वप्रवृत्तिप्रतिरोध इत्यर्थः । ननु, न हि कश्चिदिति वाक्याद् गुणैरेव प्रवृत्तिरिति चेत् तत्राहुः ॥ निषिद्धेत्यादि ॥ तथाच तस्मिन् सन्दर्भे यज्ञार्थकर्मव्यतिरिक्तकर्मप्रवृत्तेरेव तद्गुणजन्यबोधनात्तदननुसन्धायैव दुष्कल्पनां कल्पयतस्तवासुरत्वमेवेति निश्चीयत इत्यर्थः । ननु वेदस्य व्यवहारमात्रे प्रामाण्यं, न मदाग्रहासिद्धं, किन्तु, नानुध्यायाद् बहूञ्छब्दान्, जिज्ञासायां सम्प्रवृत्तो नाद्रियेत कर्मचोदनामित्यादिश्रुतिस्मृतिसिद्धमतो न मे दोष इत्यत आहुः ॥ वेदमपीत्यादि ॥ तथाच यदि प्रमाणसिद्धमेव सर्वं ब्रूषे तर्ह्यत्रापि प्रमाणं वद । यदि न वदसि तदा तत्तात्पर्याज्ञानेन पूर्वोक्तमपि धाष्टर्याद्वेत्थ । वेदस्य परोक्षवादत्वेन व्यवहारे तात्पर्याभावादित्यर्थः । एवमुपालम्भे स्वस्य वेदतात्पर्यज्ञत्वाभिमानेनाह ॥ नन्वित्यादि ॥ प्रपञ्चस्याज्ञानकल्पितत्वं ब्रह्माभेदबोधकश्रुत्यभिप्रायसिद्धम् । प्रपञ्चश्च रूपनामभेदेन द्विधेति नामप्रपञ्चरूपे वेदे तथात्वं तात्पर्यज्ञानादेव ब्रवीमीत्यर्थः । तदपि दूषयन्ति ॥ बाढमित्यादि ॥ तथाच श्रुतार्थापत्तेः शब्दत्वाभावेन युक्तित्वाद्युक्त्यन्तरविरोधे तथा तथा कल्पनं न शक्यमित्यर्थः । ननु सू-

लाभावे युक्त्यन्तरं निर्बलमिति शङ्कायां तद्बलं व्युत्पादयन्ति ॥ तथाहीत्यादि ॥ तथाच यस्मात् सर्वः प्रवर्तते तस्मान्न वेदे सर्वस्य तथात्वज्ञानमतो यथा तस्यामर्थापत्तावेका श्रुतिर्मूलत्वेन त्वयाभिसंधीयते तथाऽस्यां दृष्टार्थापत्तौ सर्वा श्रुतिर्मूलमितीयं युक्तिस्ततः प्रबलेत्यर्थः । एतस्या युक्तेर्निर्बलत्वाय प्रकारान्तरेण वृत्तिमुत्पादयन्ति ॥ ननु स्वप्नेत्यादि ॥ तदुपगम्य दूषयन्ति ॥ सत्यमित्यादि ॥ तथाच वेदे स्वाज्ञानकल्पितत्वेन मिथ्यात्वं त्वया प्रतिपाद्यते इति तद्विपरीतज्ञानाच्च स्वदुक्तरीत्या प्रवृत्त्युपपत्तिरित्यर्थः । पुनरपि प्रवृत्तिमुपपादयति ॥ नन्वित्यादि ॥ शाब्दमिति ॥ प्रपञ्चमिथ्यात्वबोधकशब्दजन्यम् । तद् दूषयन्ति ॥ नेत्यादि ॥ तथाच तादृशविशेषज्ञानस्य भ्रमानिवर्तकत्वात्तस्य फलार्थप्रवृत्त्युत्पादकत्वं दुर्घटमेवेत्यर्थः । ननु भ्रमानिवृत्तौ कदाचित् प्रवृत्तिरपि संभाव्यत एवेत्यत आहुः ॥ प्रागित्यादि ॥ इद दूषणं तुष्यतु दुर्जनन्यायेन तदुपगम्य दत्तं ज्ञेयम् । विशेषदर्शने विजातीयभ्रमनिवर्तकस्यापि दर्शनात् । वल्मीकादौ जातस्य घट इति चाक्षुषभ्रमस्य रात्रौ वल्मीकस्पार्शनेन निवृत्तेः । क्षौमादौ जातस्य कार्पासमितिस्पार्शनभ्रमस्य दिवा तच्चाक्षुषेण तदभिज्ञवाक्येन च निवृत्तेः सर्वलोकप्रसिद्धत्वात् मणिपरीक्षायामपि तथा निश्चयाच्चेति एवं युक्तिविरोधिश्रुतार्थपरत्वैव फलानुसंधानेन पुनः प्रवृत्तिमुपपादयति ॥ ननु छलेत्यादि ॥ तद् दूषयन्ति ॥ अत्रेत्यादि॥ मन्वर्हति, नार्हति वेति वादान्तरं, तथापि प्रवृत्तिस्तूपपन्नेत्यत आहुः ॥ किञ्चेत्यादि ॥ तथाच प्रवृत्त्यनुपपत्तिस्तदवस्थैवेत्यर्थः । पुनः प्रकारान्तरेणोपपादयति । ननु यत इत्यादि ॥ अभेदबोधकश्रुतेः । तदपि दूषयन्ति ॥ नैवमित्यादि ॥ उक्तदृष्टान्तन्ययेनेति ॥ स्वाप्निकभोजनदृष्टान्तन्यायेन ॥ बाधितत्वावधारणादिति ॥ उक्तश्रुतिस्मृतिभिः प्रपञ्चद्वयस्यापि ब्रह्मकर्तृत्वे आनन्दमार्गीतिस्मृत्या कर्तुः स्वभावेच साकारत्वे चावधारिते प्रपञ्चद्वयेऽपि जीवाज्ञानकल्पितत्वस्य बाधितत्वावधारणात् । नन्वाधुनिकविचारकप्रवृत्तिदर्शनान्नेदं युक्तमितिशङ्कायामाहुः ॥ संप्रतीत्यादि ॥ विचारकाणां मोहितत्वं मानमाहुः ॥ अत एवेति ॥ विचारकाणामासुरत्वादेव । हरीच्छायां मानमाहुः ॥ तदुक्तमित्यादि ॥ पाञ्चरात्रावित्यादिपदेन वार हृत्संग्रहः । ननु जीवस्येश्वरप्रतिबिम्बरूपत्वात्तत्क्रियायाश्च लोके बिम्बाधीनत्वाल्लोके तत्क्रि-

येवात्र बिम्बेच्छयैव प्रवृत्तिरिति शङ्कायां पुनर्दूषणान्तरमाहुः ॥ अप-रं चेत्यादि । अत्रायमर्थः । प्रतिबिम्बवादिनां षण्मतानि । अनादि-रनिर्वाच्या मूलप्रकृतिर्माया चिन्मात्रसंबन्धिनी, तस्यां चित्प्रतिबि-म्ब ईश्वरः । तस्या एव परिच्छिन्नानन्तप्रदेशेष्वावरणविक्षेपशक्ति-मत्स्वविद्याभिधानेषु चित्प्रतिबिम्बो जीव इत्येकम् । त्रिगुणात्मिका-या मूलप्रकृतेः शुद्धसत्त्वप्रधाने मायाख्ये रूपे चित्प्रतिबिम्ब ईश्वरः । तस्या एव रजस्तमोऽभिभूतमलिनसत्त्वप्रधाने अविद्याख्ये रूपान्तरे चित्प्रतिबिम्बो जीव इत्यपरम् । विक्षेपशक्तिप्रधान्येन मायाशब्दि-तायां मूलप्रकृतावेव चित्प्रतिबिम्ब ईश्वरः । आवरणशक्तिप्राधान्येना-विद्याशब्दितायां तस्यामेव चित्प्रतिबिम्बो जीव इति तृतीयम् एतेषु त्रिषु पक्षेषु ईश्वरो वा तस्यैव रूपान्तर वा परमात्मेति तत्र दर्पणरू-पाविद्यासंबन्धाभावात् स्फुट एव तूलाज्ञानरूपाविद्यासबन्धानङ्गी-कारः । अविद्यायां चित्प्रतिबिम्ब ईश्वरः । अन्तःकरणे चित्प्रतिबिम्बो जीव इति तुरीयम् । अत्रापि ईश्वरस्य सर्वज्ञत्वादिनिर्वाहार्थं तूला-ऽविद्यासंबन्धानङ्गीकार ।

एवं घटाकाशजलाकाशमहाकाशमेघाकाशवत् कूटस्थजीवब्रह्मेश्वर-भेदेन चैतन्यचातुर्विध्यवादिनां मते ब्रह्माश्रितमायातमसि स्थितासु सर्वप्राणिनां वासनासु प्रतिबिम्बितं चैतन्यमीश्वर । स्थूलसूक्ष्मदेहाव-च्छिन्नचैतन्यस्थिते मायाकल्पितेऽन्तःकरणे प्रतिबिम्बितं चैतन्यं जीव इति पञ्चमम् । अत्रेश्वरः परमात्मैव एक एवेत्यत्रापि तथा । एवं जीवोपाधिनान्तःकरणादिनाऽवच्छिन्नं चैतन्यमीश्वरो बिम्बभू-तः अज्ञाने तत्प्रतिबिम्बो जीवस्तत्राप्यज्ञानपरिणामभूतमन्तःकरणं जीवस्य विशेषाभिव्यक्तिस्थानमिति षष्ठम् । अस्मिन् बिम्बेश्वरवा-दिमतेऽपि तथैवेति सर्वेषु पक्षेषु दोषतौल्यम् । तथाचाविद्यासंबन्धा-ऽभावेन तद्दर्शनाभावे तत्प्रवर्तनेच्छाया अप्यभावान्न प्रवृत्त्युपपत्तिरि-त्यर्थः । एतेन संपद्यमानं दूषणान्तरमाहुः ॥ तथा सतीत्यादि ॥ द्र-ष्टृत्वनियामकत्वबोधिका श्रुतिस्तु– अदृश्यं द्रष्टृ, क्षरात्मानावीशते देव एक इत्यादिरूपा ज्ञेया ॥ पूर्वोक्तन्यायेनाविद्यासंबन्धित्व इति । अनुपदोक्तेन लौकिकद्रष्टृन्यायेन दर्पणस्थानीयाविद्यासंबन्धित्वे ।

ननु प्रतिबिम्बं पश्यतो दर्पणादिदोषसंबन्धेऽप्यज्ञत्वं भ्रान्तत्वं च नोच्यत इत्येतादृशाविद्यासंबन्धेऽपि न जीवतुल्यतापत्तिरित्यतो दूष-

णान्तरमाहुः । किञ्चेत्यादि ॥ तथाचाऽऽद्याज्ञानकल्पितगुहादर्शित्वे शुक्तिरजतद्रष्टृवद्भ्रान्तत्वं, तददर्शित्वे वोक्तदूषणमित्यर्थः । पूर्वं, द्वा सुपर्णेत्यादिना सहास्थित्यनुपपत्तिर्दूषणत्वेनोक्ता । इह तु सहप्रवेशानुपपत्तिरिति न पौनरुक्त्यम् ॥ एवमेतेषु दूषणेषु नीरूपप्रयुक्तः प्रतिबिम्बासंभवो बिम्बासंभवो विभुत्वहानिर्बिम्बप्रतिबिम्बवैजात्यं शुद्धब्रह्मणः स्वप्रतिष्ठतापरित्यागहेत्वभावश्चेति दूषणानि प्रतिबिम्बेश्वरवादेऽपि समानीति सोऽप्यनेनैव दूषितो ज्ञेयः । एवं ब्रह्मस्वरूपविचारेण दूषयित्वा जीवावस्थाविचारेण दूषणान्तरमाहुः ॥ जीववदित्यादि ॥ तत्सत्त्वे संसारित्वमेवेति ॥ शुद्धेऽप्यन्तःकरणे प्रतिबिम्बरूपताया जीवे तुल्यत्वात् कामसंकल्पाभावेन लिङ्गेन ममत्वाभावेऽप्यहंतायाः सत्त्वादन्तःकरणत्वे संसारित्वमेवेत्यर्थः । अविद्यापक्षस्यासंगतत्वं व्युत्पादयन्ति ॥ तस्येत्यादि ॥ तस्येति ॥ जीवन्मुक्तस्य स्पन्दं व्युत्पादयितुमनुवदन्ति ॥ नचेत्यादि ॥ सर्वमिति ॥ जीवस्वरूपस्थितिर्देहस्पन्दभिक्षाटनादिना च । दूषयन्ति ॥ ब्रह्मेत्यादि ॥ तेनानिवृत्तावित्यादि । जीवन्मुक्तिसंपादकं ज्ञानं यद्यदृढं तदा अध्यासानिवर्तकत्वान्न तां संपादयेत् । अतो दृढं वाच्यम् । तेनापिचेदनिवृत्तिस्तदा तथेत्यर्थः ॥ तादृति ॥ प्रारब्धम् । दूषयन्ति ॥ तर्हीत्यादि ॥ तथाच भोगैकनाश्यत्वाङ्गीकारे तव सिद्धान्तभङ्ग इत्यर्थः ॥ सिद्धान्तभङ्गनिरासायाविद्यातत्कार्यनिवृत्तावपि जीवन्मुक्तिसाधनायाविद्याकार्यानुवृत्तिमाह ॥ अन्विस्यादि ॥ तदुरगम्य दूषयन्ति ॥ अनुवर्ततामित्यादि ॥ तथा भोगाद्यभावे प्रारब्धनाशाभावेन तादृशस्य परममुक्तिः कदापि न स्यादित्यर्थः । ननु मास्तु परममुक्तिस्तथापि जीवन्मुक्त्यनुपपत्तिरूपं दूषणं तु निवृत्तमित्याशङ्कायामाहुः ॥ अपरं चेत्यादि ॥ प्रारब्धस्यादृष्टरूपत्वे कर्मरूपत्वे वा द्रव्यत्वाभावेन तत्र वेगाख्यसंस्कारस्य वक्तुमशक्यत्वात् तस्य द्रव्यधर्मत्वानङ्गीकारेऽप्यज्ञानकार्यत्वेन ज्ञाननाश्यत्वावश्यम्भावाच्चेत्यर्थः । ननु रिक्तीकृतघटस्य ह्यन्तःशेषवदनुवृत्तिरितिचेत् तत्राहुः ॥ प्रवचनेत्यादि ॥ प्रवचनमध्यापनम् । तथाचैवमङ्गीकारेऽपि तेन शेषेण कार्यांशशेषेण कार्यान्तराभाववदत्रोपदेशादिरूपकार्याभावात् संप्रदायोच्छेदोऽपि स्यादित्यर्थः । न वाऽयं दोषः सिद्धान्ते शङ्कनीयः । ब्रह्मीभूतानां सर्वात्मभावेन, प्राणन्नेव प्राणो भवतीतिवत् सर्वोपपत्तेरिति । ननु मास्तु जीवन्मुक्तिः शुको मुक्तो वाम-

देवो मुक्त इति तु प्रवादमात्रमिति वादिनं प्रत्याहुः ॥ जीववदित्यादि- तेषां भूतार्थवादत्वेन स्वार्थे प्रामाण्यस्यावश्यकत्वात् प्रवादमात्रतो- पगमस्यासंगतत्वादित्यर्थः ॥

एवं दूषिते प्रतिबिम्बवादे वादान्तरमुत्थापयाति ।

स्यादेतत्. न वयं प्रतिबिम्बं जीवं ब्रूमः । किन्तु कुल्यादि- संपर्काच्चन्द्रादिद्वैताभासवदविद्यातो ब्रह्माप्यनेकवदवभासमानं द्वि- त्र्यादिसंख्यायोगि जीवपदवाच्यमिति । नैतद् विद्वदादरणीयम् । तथाहि । अविद्यासंबन्धाद् ब्रह्मणो नेकवदवभासः कस्येति वि- चारणीयम् । न तावद् ब्रह्मणः, भ्रमायोगात् । नापि जीवस्य तादृशावभासाविषयत्वात् । न हि दोषवशाद् गृहीतचन्द्राणामिव स्वानेकत्वाभासः संभवति, चन्द्रस्य वा । तेषामलीकत्वात् । द्रष्ट- रि सत्येव तेषां भानाच्च । दोषाऽसंबन्धादेव न तस्य । किञ्चैवं जीवात्मनियामकत्वस्य परमात्मन्यसंभवः । तथाच, य आत्मानम- न्तरो यमयतीत्यादिश्रुतिर्बाधितविषया स्यात् । अपरं च, अवि- द्याब्रह्मणोः कः संबन्धः ? । न तावत् संयोगः, तयोर्विभुत्वेन त- दनङ्गीकारात् । नाप्यध्यासः, तस्याऽप्यभावात् । नापि स्वरूप- लक्षणः, मुक्तात्मन्यपि तत्संभवेन संसारित्वापादकत्वप्रसङ्गात् । आस्तां वा यः कश्चित् संबन्धः, सोऽप्यनादिर्वाच्यः । तथाच ब्र- ह्माविद्यातत्संबन्धानामनादित्वेन जीवविभागस्याऽप्यनादित्वादवि- द्यासंबन्धजीवविभागयोः कार्यकारणभावासङ्गतिः, एककालीन- त्वात् । ननु श्रुतिबोधितः कार्यकारणभावस्तर्हि तन्निर्वाहाय जीव- विभागस्यार्वाचीनतामुररीकुरु । बन्धोऽस्याविद्ययाऽनादिरिति वाक्यात् सोऽप्यनादिरेव मन्तव्य इति चेन्नैवम् । न हि सर्वात्मना तत्र सादित्वनिषेधः, किन्तु घटपटादिसाधारणतन्निषेधः । यथा देवेषु मरणनिषेधोऽमरनाम्ना । अन्यथा, अविद्ययेति करणबोधक-

तृतीयान्तं न वदेत् । तच्च बन्धलक्षणकार्यात् पूर्वकालीनत्वं विना-ऽस्या न निर्वहति । ननु बन्धनैकस्वभावायास्तस्या जीवस्य चादित्वे किञ्चित् कालं न बन्ध इत्यत्र को हेतुः । तदा जीवस्वरूपं कीदृशमित्यपि विचारणीयम् । मुक्तमिति तु न वक्तुं शक्यं, साधनाभावादग्रे बन्धाच्च । न वा बद्धं, तस्य भावित्वात् । एतदुभयातिरिक्ताऽवस्था चाप्रसिद्धेति नैवं वक्तुं युक्तमितिचेत् । नैतत् साधु । श्रिया पुष्ट्येति वाक्ये मुख्यासु द्वादशशक्तिषु गणनादविद्याया भगवच्छक्तित्वेन तदिच्छाधीनत्वात् । तथाच यद्बन्धने तदिच्छा तमेव सा बध्नाति, नान्यम् । अत एव शुकसनकादीनां सर्वदा मुक्तत्वैव, तेषु तथेच्छाऽभावात् । अत एव श्रुतिरपि, एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति, एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषतीति तदिच्छाऽधीनत्वमेवाह । जीवस्वरूपं चाग्रे वक्ष्यामः । अपिच, अविद्यासम्बन्धमात्रेण जीवभावं वदतः, शुद्धब्रह्मण्येव च तत्सम्बन्धं वदतस्तव मते जीवभावानापत्तौ हेत्वभावान्निरवयवत्वाच्चांशभेदेन तथात्वस्य वक्तुमशक्यत्वाच्च सर्वज्ञत्वादिविशिष्टपरमात्माऽसिद्ध्या सर्वश्रुत्युपप्लवः । किञ्च, जीवपरमात्मनोरनादिसिद्धं भेदं वदन् पारमार्थिकं कुतो न ब्रूषे । यतः श्रुतिरनयोरभेदं बोधयति, स च परमार्थतो भिन्नयोर्न सम्भवतीति इत्यवास्तवो भेदोऽत्र वाच्यः । तादृशश्च भेदो बिम्बप्रतिबिम्बयोराभासतदाश्रययोश्च दृष्टचरो लोके इति तथाऽत्रापि ब्रवीमि, अत एव महावाक्ये भागत्यागलक्षणाऽपि । बाढं ब्रवीषि, परं पूर्वाऽपरालोचनरहितः । तथाहि । स्यादेतदेवं यदि तत्त्वमसीत्येतन्मात्रं महावाक्यं स्यात्, न त्वेवम्, किन्तु सम्पूर्णः प्रपाठकः । तत्रोपक्रमे, अपि वा तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्येकविज्ञानेन सर्व-

विज्ञानं प्रतिज्ञातम् । तदेकमेव चेत् सर्वं भवेत् तदोपपद्यते । यथा सुवर्णखण्डाः सुवर्णकार्यं च सर्वं सुवर्णमिति सुवर्णज्ञानेन तज्ज्ञानं भवति । अतो ब्रह्मविज्ञानेन सर्वविज्ञानं वक्तुं सर्वस्य ब्रह्मरूपत्वं, सदेव सोम्येत्यारभ्य निरूपितम् । तत्र, ऐतदात्म्यमिदं सर्वम् इति जडस्य सर्वस्यापि तदात्मकत्वमुक्तम् । ततो जडस्य विनाशित्वदर्शनेन अब्रह्मत्वशङ्कानिरासायाह– तत् सत्यम् इति । तेनाविर्भावतिरोभावावेव श्रुत्यभिमतौ, नाशोत्पत्तिप्रतीतिर्भ्रान्तेति । नन्वाविर्भावतिरोभावौ नित्यावनित्यौ वा । नाद्यः, सततं घटोपलम्भाऽनुपलम्भप्रसङ्गाभ्यामनिर्वाच्यतापत्तेः । तयोर्धर्मत्वेन विरोधात् तादृग्धर्म्यसिद्धौ तयोरपि वक्तुमशक्यत्वेन शून्यवादश्चापद्येत । साधने प्रवृत्तिश्चानुपपन्ना स्यात् । किञ्च, वर्तमानस्य वस्तुनो दर्शनयोग्यतातदयोग्यतात्मकौ हि तौ, तथा सति क भगवच्छक्तित्वम् । एवं सति घटोपलम्भानुपलम्भयोः कादाचित्कत्वे हेतावुच्यमाने तत्तत्कारणस्तोमपरम्परयोस्तथात्वं तथेति वाच्यम् । एवमीश्वरेच्छापर्यन्तधावने तस्या अपि नित्यत्वेन न पूर्वोक्तदूषणोद्धारः, अपसिद्धान्तश्च । नचेतरसहकार्यभावान्नोक्तदूषणमिति वाच्यम् । उक्तरीत्या तस्यैव निरूपयितुमशक्यत्वात् । नाप्युक्तयोग्यताऽऽत्मकत्वं तत्त्वमिति वक्तुं शक्यम् । वाय्वाद्यव्यापकत्वात् । नच दर्शनपदमनुभवपरमिति वाच्यम् । अतीतानागतयोरपि चाक्षुषत्वप्रसङ्गात् । एवं सति तिरोभावोच्छेदश्च । किञ्च, तौ प्रतिव्यक्ति भिन्नावभिन्नौ वा । नान्त्यः, युगपत् सकलोपलम्भप्रसङ्गात् । नचावच्छेदकभेदान्न तत्प्रसङ्ग इति वाच्यम् । विचाराक्षमत्वात् । तथाहि । अवच्छेदको हि घटादिः । तथाच तत्तदवच्छिन्न आविर्भाव इत्यागतम्, अवच्छेदकस्य नित्यत्वात् सदोपलम्भनं स्यात् । अनुपलम्भो वा । नच तत्तत्कालोपाध्यवच्छेदभेदान्न तत्प्रसङ्ग इति

वाच्यम् । तस्यापि त्वन्मते घटतुल्यत्वात् । न ह्येकदोपलभ्यमाना- नां तथात्वमनुपपन्नम् । आविर्भावस्याविर्भावस्तत्तदवच्छेदेनेति न वक्तुं शक्यम् । तत्राप्युक्तविकल्पैरनवस्थापातात् । तिरोभावो- ऽप्येतेन व्याख्यातः । नाद्यः । आविर्भावतिरोभावौ शक्ती वै मुर- वैरिण इति वाक्यविरोधात् । नचानन्तशक्तिमत्त्वेन तदुपपत्तिः । एकजातीयकार्यकरणे एकयैव सम्भवति सत्यनेकतत्कल्पने माना- भावाद् गौरवाच्च । उक्तरीत्या कादाचित्कत्वहेतुरपि न निरूपयितुं शक्यः । न द्वितीयः, विरोधात् । भगवद्धर्माणां नित्यत्वात् । तथा सति उत्पत्तिस्तयोर्वाच्या । तर्हि घटादीनामेव तामङ्गीकुरु, किं- मन्तर्गडुभ्यामेताभ्याम् । अपसिद्धान्तश्च । तदुत्पादकं च दण्डमु- द्गरादिकमेव त्वया वाच्यं, तच्च घटतद्ध्वंसोत्पादकमेव । तिरोभा- वश्च घटादेर्न वक्तुं शक्यः । तथा सति वस्तुसत्तया लौकिकप्रत्य- क्षाविषयत्वेऽपि ध्वस्तो घटो योगिनोपलभ्येत, रूपवतः सतो यो- गिप्रत्यक्षविषयत्वनियमात् । नचैवम्, प्रमाणाभावात्, प्रजाश्चतु- ल्यकालीना नाधुना सन्ति कालिता इति श्रीभागवतात्त्वेति प्राप्ते ।

स्यादेतदिति ॥ अस्मिन् पक्षे जीवस्य वस्तुतो ब्रह्मत्वे भेदभा- नस्य जीवपदवाच्यतायाश्च दुष्टत्वं, न तु स्वरूपालीकत्वं, न वा मोक्ष- स्याऽपुरुषार्थत्वं, न वा पारलौकिकप्रयत्नप्रतिरोधः । दोषवशात्सिद्धे द्वित्वे सहप्रवेशैकत्रस्थित्योर्नियामकत्वस्य च नानुपपत्तिर्वस्तुतो मु- क्तत्वाज्जीवन्मुक्तेरपि नानुपपत्तिः । नीरूपत्वकृत आभासासम्भवस्तु जीवेशाभावासेन करोतीति श्रुतिबलादेव निरस्त इत्ययं पक्ष आद- णीय इत्यर्थः । एवं दोषेषु परिहृतप्रायेष्वपि दुष्टत्वासम्भवस्यापरि- हृतत्वात्तदादाय दूषयन्ति ॥ नैतदित्यादि ॥ आभास इति ॥ करण- संस्थानैकमुखत्वान्यतरविघटकेन बाह्यदोषेण जायमानो भ्रमः ॥ अ- वभासविषयत्वादिति ॥ आभासमानस्यैव जीवपदवाच्यताङ्गीकारात् तथेत्यर्थः ॥ न तस्येत्यादि ॥ आभास्यस्य चन्द्रस्य ब्रह्मणश्च न । तथाच दुष्टभावादसम्भवग्रस्तोऽयं पक्ष इत्यर्थः । स्वरूपविचारेण

दूषणान्तरमाहुः ॥ किञ्चेत्यादि ॥ एवमिति ॥ ब्रह्मत्वेनैक आभासक-सम्बन्धविचारेण । तृतीयमाहुः ॥ अपरं चेत्यादि ॥ मुक्त्येत्यादि ॥ एकमुक्तानन्तरमपि सर्वमुक्त्यभावादविद्यायाः सत्त्वेनाभासजनकस्य स्वरूपसम्बन्धस्यानपेतत्वान्मुक्तात्मन्यपि तादृशसम्बन्धसम्भवेन तस्य तथात्वप्रसङ्गादित्यर्थः । एवमाभासप्रयोजकसम्बन्धदूषणेन प्रतिबिम्बप्रयोजकोऽपि सम्बन्धो निवारितः । सम्बन्धाभावेन च तस्या ब्रह्मशक्तित्वमपि निवारितम् । तेन तस्या जीवशक्तित्वे दृढीभूते तत्सम्बन्धिजीवस्वरूपस्याभासप्रतिबिम्बपक्षदूषणैर्दूषितत्वात् तस्या जीवशक्तित्वमपि दूषितप्रायम् । अतः परं तदनादित्वं दूषयितुं विभागबन्धयोरनादित्वं दूषयन्ति ॥ आस्तामित्यादि ॥ उरीकुर्वीति ॥ विभागात् पूर्वं बन्धोक्तौ सर्वस्यैव ब्रह्मणो बन्धसम्भवात् तदभावाय तथेत्यर्थः ॥ सोऽपीति ॥ विभागोऽपि ॥ तत्रेति ॥ बन्धे । अन्यथेति ॥ अनादित्वस्यासङ्कुचितवृत्तित्वे । तथाचानादिबन्धाङ्गीकारे श्रुतिविरोधो दुष्परिहर एवेत्यर्थः । एवं दूषिते बन्धाद्यनादित्वे तत्साधयितुं प्रत्यवतिष्ठते ॥ नन्वित्यादि ॥ तथाच बन्धाभावहेत्ववचने सिद्धमेव तदनादित्वं प्रकारान्तरेणापि साधयति ॥ तदेत्यादि ॥ कीदृशमिति ॥ ब्रह्मरूपं जीवरूपं वा । यदि ब्रह्मरूपं तदा मुक्तं वक्तव्यं, यदि जीवरूपं तदानादिबद्धमेवावश्यं वक्तव्यम् । तदुभयमप्यसङ्गतम् । अतः किमवस्थं किम्प्रकारकं चेति विचार्य तदुपरि दूषणं देयं, नाऽविचार्येत्यर्थः । तद् दूषयन्ति ॥ नेत्यादि ॥ एवं हेत्वादिप्रश्नमात्रेण बन्धाद्यनादित्वं न सिद्ध्यतीत्यर्थः । बन्धस्य कादाचित्कत्वे अवस्थायां च हेतुं वदन्तोऽविद्याया जीवशक्तित्वं निरस्यन्ति ॥ श्रियेत्यादि ॥ तथाच यथेदानीं शुकादीनां मुक्तता तथाऽन्येषां बन्धात् पूर्वमपीति बन्धे तदभावे पुनर्बन्धे मोक्षे चेच्छैव हेतुरिति न त्वदुक्तरीत्या बन्धाऽनादित्वस्याविद्यानादित्वस्य च सिद्धिरित्यर्थः । ननु शुकादीनां योगचालितत्वात् प्राचीनसाधनानामेव मुक्तिहेतुत्वं नेच्छाया इत्याशङ्कायामाहुः ॥ अत एव श्रुतिरित्यादि ॥ तथाच साधनान्यपि तदिच्छां नातिवर्तन्ते इति यथा तत्र सव्यापारेच्छा कारणं, तथात्र निर्व्यापारा सेति पूर्वोक्तं निर्बाधमित्यर्थः । एवञ्च मुक्तित्वेन जीवकृतसाधनसाध्यत्वेन व्याप्त्यभावबोधनात्तदुक्तं साधनाभावरूपं दूषणं परिहृतम् । इच्छाप्राधान्यबोधनेनाग्रे बन्धस्यापि प्राक्का-

लीनमुक्तनाविघातकत्वं च परिहृतम् । तेन जीवस्वरूपं विभागात् पूर्वं ब्रह्मरूपमेव । तदुत्तरं तु सदामुक्तबन्धयोग्यमुक्तबद्धमुक्तभेदेनावश्यं चतुरवस्थं चेति बोधितम् । पूर्वं कीदृशमिति प्रश्ने बन्धाभावदशायामविद्यासंबन्धाभावादवच्छिन्नरूपत्वस्याप्यभावेन किंप्रकारकमिति यत् पृष्टं तत्राहुः ॥ जीवेत्यादि ॥ तथाच बन्धात् पूर्वं विभागादुत्तरं यादृशं तदग्रे वक्ष्याम इत्यर्थः ।

एवं जीवानादित्वं दूषयित्वा देवाऽसरन्यायदार्ढ्याय जीवादित्रयानादित्वसाधिकामविद्यासंबन्धानादितां दूषयन्ति ॥ अन्यश्चेत्यादि ॥ अविद्यायाः सतत्वाङ्गीकारान्न स्यादनादिः संबन्धो, यदि सार्वदेशिकस्तदा कृत्स्नब्रह्मणो जीवत्वापत्तिः । अथ प्रादेशिकस्तदा अविद्याया विभुत्वहानिस्तत्सम्बन्धीयविभूतीनां निरवयवत्वस्यैवापगमादतस्तथेत्यर्थः । एतेन विशुद्धचिदीशयोरनादित्वमपि दूषितम् । अविद्यानादित्वं तु प्रागेव दूषितमित्येव, षडस्माकमनादय इति तत्प्रतिज्ञां दूषयित्वा अनादिसिद्धजीवपरमात्मभेदोपपादकमाभासीकर्तुं प्रतिवादिनं प्रति तादृशाभ्युपगमहेतुं पृच्छन्ति ॥ किञ्चेत्यादि ॥ तद् दूषयितुं प्रमाणस्याभासत्वं च साधयन्ति ॥ वाढं ब्रवीषीत्यादि ॥ स्यादेतदेवमिति॥स्याद्वास्तवो भेदो भागत्यागलक्षणा चेत्यर्थः ॥ किन्त्विति ॥ तावता प्रतिज्ञापूर्त्यसम्भवात् ॥ सम्पूर्णप्रपाठक इति ॥ छान्दोग्य श्वेतकेतूपाख्यानरूपः । महावाक्यं यदि तावत् सर्वार्थसंग्राहकतयोपदेशत्वेनाभिप्रेतं, यदि वा वाक्यसमुदायत्वेन, उभयथाऽपि, ऐतदात्म्यमित्यादेरष्टादशाक्षरस्य संपूर्णस्य वा तथात्वं, न चतुरक्षरस्येति भागत्यागलक्षणाया अयुक्तत्वमु क्रमविरोधादिति वक्तुमाहुः ॥ नत्रेत्यादि ॥ यथा सुवर्णेत्यादि ॥ यथा सोम्यैकेन लोहमणिना लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोह इत्येव सत्यमिति श्रौतदृष्टान्तात् । लोहः सुवर्णं, दार्ष्टान्तिके खण्डाः जीवाः, कार्यं जगदिति फलिष्यति । एवं ब्रह्मपरिणामत्वबोधनात् तस्या विचित्रपरिणामशीलत्वं निरस्तं भविष्यति ॥

तत्रेति ॥ प्रपाठकार्थसंग्राहकं, ऐतदात्म्यमिदं सर्वं, तत् सत्यं, स आत्मा तत्त्वमसि श्वेतकेतो इत्यस्मिन्नुपदेशवाक्ये । इदं हि नवकृत्व उपदिष्टम् । अर्थस्तु– सदेव सोम्येदमित्यादिना असतः सत्तां कण्ठतो युक्तिपूर्वकं निराकृत्य, तदैक्षत बहु स्यां प्रजायेयेतीक्ष्योक्तिपू-

र्थकं तस्मात् ततस्तेजआदिक्रमेण सृष्टिमुक्त्वाऽग्रे वदति । स य ए-
षोणिमैतदात्म्यम् एतत् आत्मा एतदात्मा । मयूरव्यंसकादित्वात्
समासः । न तु बहुव्रीहिः । एतदात्मा यस्य तदेतदात्मं, तद्भाव ऐतदात्म्य-
मित्युक्तौ श्रूयमाणपदवैयर्थ्यापत्तेः अत उक्त एव समासः ।
एतदात्मनो भाव ऐतदात्म्यम् । मृल्लोहकृष्णायसदृष्टान्तस्य उपक्रमे
उक्तत्वात् तद्वत् सन्मयमित्यर्थः ॥ तत्सत्यमिति ॥ तत्पूर्वोक्तं स-
त्यं सर्वकालं सदित्यर्थः । तेन वैनाशिकार्द्धवैनाशिकप्रतिपन्ने अस-
त्त्वविनाशित्वे, मायावादप्रतिपन्नं मायिकत्वं च निरस्तम् । स आत्मे
त्यनेन सर्वस्यानागन्तुकानारोपितं रूपं स इत्युक्तम् । तत्त्वमसीत्यनेन
जीवस्य तदात्मकत्वमुक्तम् । तस्य भावस्तत्त्वमिति । तेन जीवानामंशत्वं,
जगतः कार्यत्वम्, उभयोरपि ब्रह्माभेदात् प्रतिज्ञादिपूर्तिः । तमेतम-
र्थं विवृण्वन्ति ॥ तत्रैतदात्म्यमित्यादि ॥ अत्र मध्ये वैनाशिकवाद-
निरासं श्रुत्वा प्रमाणज्येष्ठत्वादग्रे बाधाभावाच्चोत्पत्तिनाशप्रतीत्यो-
रभ्रान्तत्वं सांख्यप्रतिपन्नयोराविर्भावतिरोभावयोः प्रतिबन्दिपर्यव-
सितत्वेन तदसाधकत्वं च मन्वानो नैयायिकादिः प्रत्यवतिष्ठते ॥
नन्वित्यादि ॥ सार्वजनीनां प्रतीतिमनादृत्य जडस्य सर्वदा सत्त्वसा-
धनाय यावाविर्भावतिरोभावावङ्गीक्रियेते तौ सांख्यमतेऽभिव्यक्ति-
तदभावात्मकत्वाज्ज्ञानविषयतदभावात्मकौ पदार्थान्तररूपौ । तथाच
ज्ञानतदभावसमनियतौ । अतस्तयोर्नित्यत्वे ज्ञानतदभावयोरपि नि-
त्यत्वम् आवश्यकम् । तथा सति सततं तदाधारभूतघटोपलम्भानु-
पलम्भप्रसङ्गाभ्यां तयोरभिव्यक्त्याद्यात्मकत्वेन निष्क्रष्टुमशक्यत-
या तदाश्रयस्य घटादेश्चोपलब्धोऽनुपलब्ध इति निष्क्रष्टुमशक्यत-
या तयोस्तस्य चानिर्वाच्यतापत्तेः । अत्रार्हे कृत्ये ण्यत् । नितरामि-
दमित्थतया वक्तुं योग्यत्वं निर्वाच्यत्वम् । तदभावः अनिर्वाच्यत्वम् ।
प्रकृते कम्बुग्रीवत्वादिना निर्वाच्यत्वेऽपि सततमुपलम्भानुपलम्भा-
भ्यां तथात्वमापद्यते । यदि तौ नित्यौ स्यातां तदाधारो घटादिः सा-
मग्रीसमवधाने सदोपलम्भानुपलम्भविषयः स्यात् । यदि तथा स्या-
त्ताभ्यां निर्वाच्यो न स्यादिति तर्के ह्यापादकापाद्ययोर्व्याप्तिः । य-
था निर्वह्निः स्यान्निर्धूमः स्यादित्यत्र वह्न्यभावधूमाभावयोः । प्रकृते
यद्यपि नित्यत्वसदोपलम्भानुपलम्भविषयत्वयोर्धर्मनित्यत्वधर्म्यनि-
र्वाच्यत्वयोश्च न व्याप्तिः । नित्यद्रव्येषु व्यभिचारात् । तथाप्याविर्भावा-

दिनित्यत्वतदाश्रयानिर्वाच्यत्वयोः स्या निराबाधा । यद्यपि सामा-न्यव्याप्तौ सर्वस्य पक्षे निवेशात् सपक्षाभावेन व्याप्तिग्रहाभावे त-र्कस्य मूलतः शैथिल्यं, तथा विशेषव्याप्तावपि । तथाहि । घटः, अ-नित्याविर्भावतिरोभाववान् कादाचित्कोपलम्भानुपलम्भविषयत्वात् यत्र यत्र कादाचित्कोपलम्भानुपलम्भविषयत्वं तत्र तत्रानित्या-विर्भावतिरोभावकत्वम् । यथा पटे । व्यतिरेके तु, यत्र यत्र नित्या-विर्भावतिरोभावकत्वं तत्र तत्र सदोपलम्भानुपलम्भाविषयत्व-मिति । घटः कादाचित्कोपलम्भविषयः । कालविशेषे ताभ्यां नि-र्वाच्यत्वात् । यदेवं तदेवम् । पटवत् । व्यतिरेके तु, यत्र यत्र स-दोपलम्भानुपलम्भविषयत्वं तत्तत्सदा ताभ्यामनिर्वाच्यत्वम् । अन-योर्व्यतिरेकव्याप्त्योरप्रसिद्धत्वान्मूले शैथिल्यमविचार्यम् । तथा-पि, प्रसञ्जकं तु स्वानिष्टं परानिष्टं प्रसज्यते * विपर्यये पराभीष्टं स्वाभीष्टे पर्यवस्यतीति तर्के जयोपायस्याभियुक्तैरुक्तत्वात् पूर्वपक्षी स्वानिष्टं नित्यत्वं, परानिष्टं सदोपलम्भानुपलम्भाविषयत्वमनिर्वा-च्यत्वं चापादकापाद्यीकृत्य सिद्धान्तिनं जेतुं तथोक्तवानिति बोध्य-म् । एतावतापि तर्कदोषानपायाद् दूषणान्तरमाह ॥ तयोरित्या-दि ॥ तथाच मास्त्वनिर्वाच्यत्वमुक्तरीत्या तथापि जडगतोत्पत्तिना-शौ स्तः । तयोरङ्गीकारात् तौ धर्मत्वेन निश्चितौ । तयोर्विरोधप्रयो-जकत्वं च न धर्मत्वम् । रूपरसादौ व्यभिचारात् । नापि भावाभा-वरूपत्वम् । घटादभावसमूहालम्बनाभावप्रसङ्गात् । किन्तु भा-वाभावरूपत्वे सत्युभयनित्यत्वम् । तदोत्पत्तिनाशवत्कालभेदेन स्थि-त्यभावात्तद्धर्मिभूतस्य जडस्य विरुद्धधर्माधारत्वमभ्युपगन्तव्यम् । तच्च तन्नित्यत्वाधीनम् । नित्यत्वं च तादृग्धर्मिसिद्ध्यधीनमित्यन्यो-न्याश्रयाद्धर्मिणस्तयोश्चासिद्धौ शून्यवादापत्तिरिति सत्कार्यवाद-स्थापनाय प्रवृत्तस्य वैनाशिकमतापत्तिरित्यर्थः । उक्तदूषणस्य व्यावहारिकत्वाल्लोकव्यवहारस्य गुणसन्निपातजन्यत्वेनाप्रामाणिक-त्वात् तत्सिद्धस्य दूषणस्याप्रयोजकत्वमित्याशङ्क्य लोकवेदसाधार-णं दूषणान्तरमाह ॥ साधनेत्यादि ॥ साधनं = घटयागब्रह्मज्ञानादौ प्रवृत्तिस्तत्करणोद्यमः । साऽपि वस्तुमात्रनित्यत्वेन तत्फलस्यापि त-थात्वादनुपपन्ना स्यात् सिद्धसाधनदोषग्रस्ता विधिविशेषविचारज-न्यत्वहीना च स्यात् । तथाच श्रुतितात्पर्योद्घाटनाय प्रवृत्तस्य

श्रुतिविरोध इति महदेव दूषणमित्यर्थः । एवं धर्मविचारेण दूषयित्वा तयोर्विरोधदृढीकरणाय स्वरूपविचारेण दूषयिष्यन् स्वरूपस्यानुक्तत्वात् तद्बोधयितुं तौ लक्षयति ॥ किञ्चेत्यादि ॥ योग्यता च बाधाऽभावः । बाधश्च शून्यत्वरूपोऽभावात्मेति तदभावरूपाया योग्यताया भावरूपत्वम् । एवंलक्षणकत्वे सिद्धान्तापघातरूपं दूषणमाह ॥ तथा सतीत्यादि ॥ वस्तुधर्मत्वे सति, वक्ष्यमाणवाक्येनाङ्गीक्रियमाणं भगवच्छक्तित्वसिद्धान्तमपहानिष्यतीत्यर्थः । वाक्यस्याऽनङ्गीकृतौ नोक्तं दूषणमित्यतो दूषणान्तरमाह ॥ एवं सतीत्यादि ॥ मास्तु भगवच्छक्तित्वं तथापि प्रत्यर्थं वाक्यस्याङ्गानुरोधेन वस्तुधर्मत्वं तु तयोरङ्गीकार्यम् । एवं सति लोकवेदसाधारणघटोपलम्भानुपलम्भकादाचित्कत्वरूपमर्यादाया निर्वाहाय घटादेराविर्भावादेश्च नित्यत्वेऽपि उपलम्भादिकादाचित्कत्वहेतौ विचार्यमाणे तत्कारणस्तोमपरम्परयोरुपलम्भकारणभूता या घटस्य विषयता चक्षुरादिः सन्निकर्षश्च तादृशविषयताया अपि कारणरूपादिमत्त्वं सन्निकर्षस्य च कारणमिन्द्रियमनःसंयोगः । तत्कारणमात्ममनःसंयोगः । सूर्यपरिस्पन्दः क्षणविशेषसंबन्धश्च । एवमनुपलम्भे अविषयत्वादिकं तेषां स्तोमस्य परम्परायाश्च कादाचित्कत्वमुपलम्भादिकादाचित्कत्वे हेतुरिति वाच्यम् । तत्र सर्वकारणभूताया ईश्वरेच्छायाः कारणत्वमपि वाच्यम् । तथा सति तस्यानित्यत्वेन तत्कृतसूर्यपरिस्पन्दानामपि तथात्वेन सदोपलम्भाद्यापत्तौ, न घटानिर्वाच्यतापत्तिशून्यवादयोरुद्धारः । यद् भूतं यच्च भाव्यमिति श्रुत्युक्तभूतादिव्यवहारोच्छेदापत्त्यापसिद्धान्तश्चेत्यर्थः । ननु सहकारिसमवधानाभावेनोपलम्भादेः कादाचित्कत्वोपपत्तौ नाऽनिर्वाच्यतापत्तिशून्यवादावित्यत आह ॥ नचेति ॥ यः कोऽपि सहकारित्वेनाभिमन्तव्यस्तस्य सर्वस्यापि स्तोमान्तःपातित्वेन कारणकोटावेव निवेशात्तदतिरिक्तस्य तस्य तथात्वादित्यर्थः । सहकारिणोऽपि धर्मित्वेन तस्याप्याविर्भावतिरोभावयोर्वक्तव्यत्वे तत्कादाचित्कहेत्वनिर्वाच्यत्वेन तथात्वादित्यर्थः । एवं पूर्वोक्तदूषणस्थापनेन तयोर्वस्तुधर्मत्वं दूषयित्वा तत्स्वरूपं दूषयितुं तल्लक्षणं दूषयति ॥ नापीत्यादि ॥ वाय्वादीत्यादिपदेन कालदिगाकाशाद्याः ॥ अव्यापकत्वादिति ॥ आविर्भावलक्षणस्य वाय्वादावाविर्भावेन तथेत्यर्थः ॥ चाक्षुषत्वप्रसङ्गादिति ॥ अनुभवसामा-

स्यमध्ये चाक्षुषस्यापि प्रवेशात्तथेत्यर्थः । नन्वनुभवपदं विभागेन तत्र तत्र तत्तदनुभवपरमित्यतो न दोष इतिचेत्तत्राह ॥ एवं सतीति ॥ अनुभवयोग्यत्वस्याविर्भावलक्षणत्वेनातीतानागतातीन्द्रियविप्रकृष्टव्यवहितानामाविर्भूतत्वे सति । एवं लक्षणं दूषयित्वा तयोर्भगवच्छक्तित्वं दूषयितुं भेदाभेदविकल्पेन तौ दूषयति ॥ किञ्च, तौ प्रतीत्यादि ॥ युगपदिति ॥ वस्तूनां सर्वेषां नित्यत्वेन तद्धर्मस्याविर्भावस्यैकत्वेनैकोपलम्भनमये तथात्वादित्यर्थः । एवमेकानुपलम्भदशायां सर्वानुपलम्भोऽपि तिरोभावविचारेण बोध्यः । यथैकसमवायवादिमते घटनिरूपितसमवायस्य तन्तुषु सत्त्वेऽपि न घटे तन्तुसमवेतत्वप्रसङ्गः, प्रतीतिर्वा । अवच्छेदभेदात् । तथा आविर्भावस्यैकत्वेऽप्यवच्छेदभेदान्न युगपत् सकलोपलम्भप्रसङ्ग इतिचेत्तत्राह ॥ नचेत्यादि ॥ सदोपलम्भ इत्यादि ॥ तथाच तत्कादाचित्कत्वमर्यादाभङ्गः, प्रत्यक्षविरोधश्चेत्यर्थः ॥ नन्ववच्छेदकस्य घटादेर्नित्यत्वेऽपि अवच्छेदकान्तरस्य कालोपाधेरनित्यत्वेन तदवच्छेदभेदान्न सदोपलम्भप्रसङ्ग इतिचेत्तत्राह ॥ न हीति ॥ नित्यत्वादिति ॥ घटवन्नित्याविर्भावधर्मकत्वात् । ननु दिनराज्यादिभेदस्योपलभ्यमानत्वात् तन्नित्यत्वमनुपपन्नमितिचेत्तत्राह ॥ न हीति ॥ नित्यत्वं हि सर्वकालवर्तमानत्वम् । तथैकदोपलभ्यमानानां घटकालाविर्भावानां वर्तमानत्वेन सिद्धे सत्त्वे उत्पत्तिनाशयोरनङ्गीकारान्नायुक्तम् । अतः कालस्यापि घटतुल्यत्वे सिद्धे नोक्तदूषणस्य परिहार इत्यर्थः । नन्वस्त्वेवं, तथाप्याविर्भावायाविर्भावान्नोक्तदोष इतिचेत् तत्राह॥आविरित्यादि॥तत्तदवच्छेदेनेति॥तत्तत्कालावच्छेदेन॥ तत्रापि तस्मिन्नाविर्भावाविर्भावेऽपि, उक्तविकल्पैस्तन्नित्यत्वप्रतिव्यक्त्यभिन्नत्वतदवच्छेदककालनित्यत्वविकल्पैर्दोषतादवस्थ्ये पुनस्तस्यापि तस्यापीत्येवमनन्ताविर्भावकल्पनेऽनवस्थापातादित्यर्थः । एतद् दूषणं तिरोभावेऽप्यतिदिशति ॥ तिरोभावोऽपीति ॥ तिरोभावस्य नित्यत्वे सदोपलम्भापत्तौ तन्निवारणाय तिरोभावस्य तिरोभावस्तदानीं कल्पनीयः । तस्मिन्नपि नित्यत्वप्रतिव्यक्त्यभिन्नत्वतदवच्छेदककालनित्यत्वविकल्पैः सदोपलम्भापत्तितिरोभावोच्छेदापत्तिदूषणग्रासात् सोऽप्येतेनाविर्भावदूषणेन दूषित इति पुनः संरम्भो न क्रियत इत्यर्थः । एवमभेदपक्षदूषणेन वस्तुधर्मताद्दढीकरणात्तयोर्भगवच्छक्तित्वं दूषितम् । एतदेव द्रढयितुं भेदविकल्पेना-

ऽपि साक्षात्तद् दूषयति ॥ नाद्य इति ॥ ननु परास्य शक्तिर्विविधैव श्रूयत इति श्रुतेर्भगवतोऽनन्तशक्तित्वात् प्रतिव्यक्तिभेदो न तद्बाधक इत्यत आहुः ॥ नचेत्यादि ॥ अनन्तशक्तिमत्त्वेनेति ॥ अत्रानन्तश्चासौ शक्तिमाँश्चेति समासः । अनन्ताश्च ताः शक्तयश्चेति समासे न कर्मधारयान्मत्वर्थीय इति परिभाषासु निषेधान्मतुबभावापत्तेः । तथाच ब्रह्मवादे भगवतः सर्वरूपत्वात् तत्तच्छक्तिमत्वाच्च नोपपत्तिः। अनन्तशक्तित्वेनेति पाठे तु न कश्चित्संदेहः । तत्र हेतुः ॥ एकेत्यादि ॥ तावताऽपि श्रुतेः कार्यस्य चोपपत्तौ अनेकतत्कल्पने श्रुत्यन्तरादेर्मानस्याऽभावात् । व्यसनमात्रेण कल्पनेऽपार्थनानापदार्थकल्पनागौरवाच्चेत्यर्थः । उक्तश्रुतेरेव ग्रहिलतया तत्रापि प्रामाण्याङ्गीकारे दूषणान्तरमाह ॥ उक्तेत्यादि ॥ अनित्यविकल्पस्यावशिष्टत्वात्तमपि दूषयति ॥ न द्वितीय इत्यादि ॥ अनित्यत्वपक्षो नेत्यर्थः ॥ अपसिद्धान्त इति ॥ प्रपञ्चमध्यपातिनोस्तयोरुत्पत्तिमत्त्वेनाब्रह्मत्वप्रसक्तौ सर्वस्य ब्रह्मात्मकत्वमिति सिद्धान्तहानिरित्यर्थः । अस्मिन् पक्षे तयोः स्वरूपाऽसत्त्वं व्युत्पादयन्ति ॥ तदुत्पादकमित्यादि ॥ सर्वपक्षसाधारणं दूषणान्तरमाह ॥ तिरोभाव इत्यादिना ॥

एवं पूर्वपक्षेण तयोर्निःस्वरूपतया खपुष्पतुल्यत्वे साधिते प्रथमतः खपुष्पतुल्यतां निराकर्तुं तत्स्वरूपनिरूपणं प्रतिजानते ॥

अत्रोच्यते तत्स्वरूपं तच्छ्रुत्वाऽपास्य संशयान् ।
ब्रह्मवादे कृतात्मानः प्राप्नुवन्ति हरिं बुधाः ।

अनुभवाविषयत्वयोग्यता आविर्भावः, तदविषयत्वयोग्यता तिरोभावः । ते च वस्तुसत्त्वेनैवावच्छिद्येते । न ह्यलीके ते सम्भवतः, तयोर्धर्मत्वेन निराश्रयत्वासम्भवात् । किञ्च, भावित्वेन भूतत्वेन च व्यवह्रियमाणयोर्वस्तुनोः सत्ता त्वयाऽप्युररीकार्या, तयोर्घटादिधर्मत्वेन तदभावे निराश्रयत्वप्रसङ्गात् । एतेन वर्तमानप्रागभावप्रतियोगित्वं भावित्वं, वर्तमानध्वंसप्रतियोगित्वं ध्वस्तत्वमितिनिरस्तम् । नच कालोपाधिरेव तदाश्रय इति वाच्यम् । तत्र तद्वैशिष्ट्यप्रतीतिप्रसङ्गस्य दुर्निवारत्वात् । ननु यथा तन्त्वधिकर-

णक—पटनिरूपितसमवायस्य काले सत्त्वेऽपि तत्समवेतत्वेन न पटे प्रतीतिः, तेन सम्बन्धेन तत्रासत्त्वात् । तथात्र तत्प्रतियोगित्वाभावान्न तथा प्रतीतिरितिचेन्न । प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषत्वेनाङ्गीकारात् । तस्य च स्वरूपद्वयात्मकत्वात् तस्य चात्रापि सत्त्वात् । ननु तत्सत्त्वेऽपि स विशेषो नात्रेति चेत्, हंत ! स को वा ? यत्रेदृशी तव श्रद्धा । न दृष्टः, प्रमाणाभावात् । ननु तद्द्वयसत्त्वेऽपि वैशिष्ट्याप्रतीत्यन्यथानुपपत्त्या सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजननयोगत्वलक्षणः कल्प्यते इति चेद्, मैवम् । उक्तरूपस्यापि काले एव सत्त्वं त्वया वाच्यम । तथाचोक्तदूषणभिया तत्समवायस्य प्रयोजकत्वं वाच्यम् । तथाच तदा समवाय्यभावेन उक्तयोग्यत्वसमवायस्य कुत्रापि वक्तुमशक्यत्वात् कालाश्रयत्वस्याप्यसिद्धेः । जन्यभावस्यान्यत्र समवेतस्यैव कालाधारत्वनियमात् । अन्यथा असतोऽप्याश्रयः काल इत्यङ्गीकार आपद्येत । न ह्यन्यधर्मस्य कालाश्रयत्वेनैव सिद्धिः क्वचिद् दृष्टचरी । तथा सत्यन्यधर्मत्वव्याहतेः । अतो भावित्वभूतत्वव्यवहारकालेऽपि घटादिसत्ता उररीकार्या । किञ्च, त्वदुक्तयोग्यता केनावच्छिद्यत इति पृच्छामः । तत्र चेद्यदा कदाचिद् वस्तुसत्तयैवावच्छिद्यत इति ब्रवीषि, तदा, 'यदा कदा चिद्' इतिं त्यज । अप्रयोजकत्वाद्, गौरवाच्च । तथा, सम्बन्धान्तरमन्तरेणेति च । स्वरूपस्य सम्बन्धत्वे सिद्धे सम्बन्धान्तरपदं सार्थकं भवेत् । तथाचात्माश्रयः । नच षोढासन्निकर्षाभावेऽपि तथात्वं तदर्थ इति वाच्यम् । योगजधर्मेऽतिव्याप्तेः । नच लौकिकतज्जननयोग्यत्वं विवक्षितमिति वाच्यम् । सन्याप्तिवैशिष्ट्यज्ञानजनकसामान्यलक्षणाजन्यप्रत्यासत्तावतिव्याप्तेः । नच सामान्ययोगजधर्मज्ञानलक्षणषोढाप्रत्यासत्त्यभावेऽपि तथात्वं तदर्थ इति वाच्यम् । असिद्धेः । न ह्युक्ततदभावे तथात्वं क-

चिव सिद्धम् । विवादास्पदीभूतभावित्वादेस्तु पूर्वोक्तयुक्त्या निराश्रयत्वप्रसङ्गस्य दुर्निवारत्वेन तदापि धर्मिसिद्धावनुमानादिना तज्ज्ञाने तत्समवेतोक्तप्रतियोगित्वमपि विषयीभवतीति नोक्तप्रत्यासत्त्यभाव इति सर्वमनवद्यम् ॥

अत्रोच्यते तत्स्वरूपमित्यादिना ॥ संशयानिति ॥ पूर्वोक्तश्रुतितद्विरुद्धयुक्तिकृतान् । कृतात्मानः कृतबुद्धयः । तत्पूर्वोक्तदूषणसञ्चाराय पूर्वं तयोर्लक्षणमाहुः ॥ अनुभवेत्यादि ॥ अत्रानुभवपदं साक्षात्कारपरम् । तदन्यज्ञानोत्तरमनुभवामीत्यनुव्यवसायाभावात् । विषयत्वं विषयविषयिणोः संबन्धरूपं पदार्थान्तरम् । अविषयत्वं तदभावस्तद्विरुद्धमर्थान्तरं वा । योग्यतापदं तु तदुक्तार्थनिष्कर्षार्थमनुवादमात्रम् ॥ तद्रूपायोग्यतेति ॥ तथाच साक्षात्कारविषयत्वमाविर्भावस्तदविषयत्वं तिरोभाव इत्यर्थः । तत्स्वरूपमुक्त्वा ताभ्यां वस्तुसत्तां साधयन्ति ॥ ते चेत्यादि ॥ एवं विवक्षया पूर्वोक्तलक्षणे स्वरूपे चाङ्गीकृते तिरोभावदशायामपि वस्तुसत्त्वोपगमने तद्धर्मभूतयोर्विरुद्धत्वस्यानपेतत्वेन सत्त्वनिर्वाच्यत्वशून्यवादापत्तिसाधनप्रवृत्त्यनुपपत्त्युपलम्भादिकादाचित्कत्वानुपपत्त्यपसिद्धान्ता अवशिष्यन्ते । तेषु पूर्वं शून्यवादापत्तिं परिहर्तुं वादिनं प्रत्यनिर्वाच्यतापत्ति प्रतिबन्द्या वदिष्यन्तो भूतभावित्वदशायामर्द्धवैनाशिकेनानङ्गीक्रियमाणां वस्तुसत्तां, गले पादुकान्यायेनाङ्गीकारयन्ति ॥ किञ्चेत्यादि ॥ त्वयेति ॥ वर्तमानकाले वस्तुसत्तामुपगच्छतार्द्धवैनाशिकेन । तत्र हेतुः— तयोरित्यादि ॥ भावित्वं यदि कारणेन सम्बद्धं तदा वर्तमाने कपाले भाविकपालमिति प्रतीतिः स्यात् । अथाजन्यं तद् घटत्वादिवत्कार्येणैव सम्बद्ध्यते, न कारणेनेतिचेत्, तदा अजन्यभावत्वेन नित्यत्वात् कारणव्यापारोत्तरं तदविनाशेन कदापि घटादिकार्ये सत्तासम्बन्धो न स्यादिति शून्यवादापत्तिः । प्रत्यक्षविरोधश्चातो घटादीनां सत्ता आवश्यकी । तथा सति भावित्वमनित्यम् । अनित्यभावत्वाच्च जन्यम् । जन्यत्वाच्च न पूर्वकाल इति कारणव्यापारात् पूर्वं घटादिसत्ताङ्गीकार्या । साचेन्नाङ्गीक्रियते तदा भावित्वस्य निराश्रयत्वम् । एवं भूतत्वमपि कारणासम्बद्धं चेद्वर्तमाने कपाले ध्वस्तकपालमित्यापत्तिः । अतस्तदापि घटादिसत्ताङ्गीकार्या । अतस्तयोर्धर्म-

त्वेन वृत्तिमत्त्वेन तदाभावे प्रागभावध्वंसाधिकरणकाले घटादिसत्त्वाऽभावे । तथा नित्यत्वपक्षे वर्तमानवस्त्वनिर्वाच्यतापत्तिर्यथा मम तथा वस्त्वनित्यत्वपक्षे भूतभावित्ववस्त्वानिर्वाच्यत्वं तवापीति तौल्यान्न वयं पर्यनुयोज्या इत्यर्थः । ननु भावित्वे भूतत्वे च निरुक्ते भाविभूतत्ववस्तूनां निर्वाच्यत्वस्यानायाससिद्धत्वान्न तौल्यमित्यत आहुः ॥ एतेनेत्यादि ॥ एतेन निराश्रयत्वप्रसङ्गरूपेण दूषणेन तथाचोक्तदूषणस्य निरुक्त्यनन्तरमपि तादवस्थ्यान्न तौल्यपरिहार इत्यर्थः । वर्तमानकालोत्तरकालिकत्वं भावित्वमिति लक्षणेऽपि दूषणतादवस्थ्यं बोध्यम् । ननु प्रागभावाद्यवच्छेदकस्य सूर्यपरिस्पन्दादिरूपकालोपाधेर्भावित्वाद्याश्रयत्वाङ्गीकारान्न पूर्वोक्तदूषणावकाश इत्यत आहुः ॥ नचेत्यादि ॥ स कालोपाधिर्भावी भूतो वर्तमानो वा । यद्याद्यौ तदा दोषतादवस्थ्यम् । यद्यन्त्यस्तदा वर्तमाने प्रागभावाद्यवच्छेदके तस्मिन् भाविभूतप्रतीतिप्रसङ्ग इत्युभयतः पाशपात इत्यर्थः । उक्तदूषणं वारयितुं प्रयतन्ते ॥ नन्वित्यादि ॥ तेन संबन्धेन नञासत्त्वात् । काले समवायस्योदासीनपटवृत्त्यनियामकतया पटस्य कालविशेषणतया काले सत्त्वमिति समवायसंबन्धेन काले अवर्तमानत्वात् । तथात्र तत्प्रतियोगित्वाभावात् । येन संबन्धेन प्रागभावादिप्रतियोगित्वं घटादौ तेन संबन्धेनात्र प्रागभावाद्यधिकरणकाले तत्प्रतियोगित्वाभावान्न तथा प्रतीतिः । न प्रागभावाद्यधिकरणकाले भावित्वादिवैशिष्ट्यप्रतीतिरित्यर्थः ।

एतां युक्तिं दूषयन्ति ॥ नेत्यादि ॥ त्वदुक्तरीत्या काले भावित्वादिवैशिष्ट्यभावो नोपपद्यते । कुतः । पटस्थले पटस्वरूपस्य तत्र तत्र तद्वृत्तिनियामकसम्बन्धयोश्च भेदान्न पटे कालसमवेतत्वप्रतीतिः । प्रकृते तु प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषत्वेनाङ्गीकारात् तस्य च स्वरूपद्वयात्मकत्वात् । अभावविरहात्मत्वं वस्तुनः प्रतियोगित्वमिति प्राचीनलक्षणस्य भेदप्रतियोगिनि घटादावव्याप्तेस्तद्धर्मे घटत्वादावतिव्याप्तेश्च दुष्टतया प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषत्वेन नव्यैरङ्गीकारात्तस्य प्रतियोगित्वस्यानुयोगिज्ञानाधीनज्ञानकत्वेनानुयोगिस्वरूपद्वयात्मकत्वात् । तस्य स्वरूपद्वयस्यात्रापि कालस्थलेऽपि सत्त्वात् । तथाचात्र स्वरूपद्वये विचार्यमाणे प्रागभावादिस्वरूपं प्रतियोगिस्वरूपं चेति वक्तव्यम् । तथा सति यथा तत्र प्रतियोगिस्वरू-

पमादाय सम्बन्धसिद्धिस्तथात्र कालस्वरूपमादायेति सम्बन्धस्य स्वरूपस्य च तौल्येन तस्य स्वरूपसम्बन्धस्यात्र कालेऽपि सत्त्वान्न समवायदृष्टान्तेनेष्टसिद्धिरित्यर्थः ॥ सविशेष इत्यादि ॥ प्रतियोगिनि प्रतियोगिस्वरूपकृतः सम्बन्धः काले कालस्वरूपकृत इति सम्बन्धघटकीभूतस्वरूपभेदाद्यो विशेषः प्रतियोगिनि स न काले इति तादृशप्रतीत्यभाव उपपद्यते इत्यर्थः। तं विशेषं निश्चेतुं पृच्छन्ति ॥ हंतेत्यादि ॥ प्रतियोगिस्वरूपकृतः, अभावनिरूपकत्वरूपो वा, अन्यो वा, सोऽपि दृष्टः कल्प्यो वेति विकल्प्याद्यं दूषयन्ति—

नेत्यादि ॥ प्रमाणाभावादिति ॥ प्रतियोगिनोऽन्यस्य वा सत्त्वेनाविषयतया तदभावादित्यर्थ ॥ कल्प्यत इति ॥ स्वरूपसंबन्धस्य स्वरूपात्मकत्वात् तत्र सखण्डोपाधिसामान्यरूपो नियतपदार्थवादित्वात् कल्प्यत इत्यर्थः । तद् दूषयन्ति ॥ मैवमित्यादि ॥ कस्य स्वरूपे कल्प्यते । प्रतियोगिनो वा, निरूप्यस्य प्रागभावादेर्वा, कालस्य वा। नाद्य. । तस्यैवासत्त्वात् । न द्वितीयः। निरूप्ये निरूपकधर्माधारत्वस्य काप्यसिद्धत्वात्। वर्तमाने तस्मिन् भावीत्यादिप्रतीत्यापत्तेश्च। अतः परिशेषात् कालतत्सत्त्वं वाच्यम् तथा सत्युक्तरीत्या तदसिद्धेरित्यर्थः। तत्र हेतु.—जन्यभावस्येति॥ नश्वरभावत्वेन जन्यत्वेन व्याप्तेर्भावित्वप्रतीतिजनकस्य तस्यजन्यत्वं, ध्वस्तत्वप्रतीतिजनकस्य तु स्फुटमेवजन्यत्वमिति तस्यापि तथात्वं नियतमिति तस्यापि तदाश्रितत्वासिद्धिरित्यर्थः तथाच विनष्टे घट, ज्ञातो घट इति प्रतीतिस्थले यथा समवाय्यभावेन ज्ञाततोत्पत्तिर्दूष्यते तथात्रापि बोध्यमिति भावः । नन्वजन्यभावस्येव जन्याभावस्यान्यत्रासमवेतस्यापि कालाधारत्वाङ्गीकारे बाधकाभावादुक्तनियमोऽप्रयोजक इति चेत्तत्राहुः ॥ अन्यथेत्यादि ॥ असमवेतत्वस्य नष्टघटादौ शशशृङ्गादौ वाऽऽसक्तितौल्यात् तदाश्रयेऽपि कालः स्यात् । तथा सति, प्रजाश्च तुल्यकालीना इति त्वदुक्तवाक्यस्यैव विरोध इत्यर्थः । नन्वन्यथानुपपत्तेर्बलिष्ठत्वाद्वाक्यविरोधं सोढ्वाऽपि यथा तथाङ्गीक्रियते इतिचेत् तत्राहुः॥ न हीत्यादि ॥ तथाच प्रसिद्धविरोधः, पूर्वोक्तदूषणानुद्धारश्चेत्यधिकदूषणद्वयापत्तिरित्यर्थः। उक्तं निगमयितुं सिद्धमाहुः ॥ अत इति ॥ भावित्वादिव्यवहारसाधनस्यावश्यकत्वात् ॥ ऊरीकार्येति ॥ उक्तविशेषस्य साश्रयत्वायोरीकार्या । तथाचैवं वस्तुसत्तासिद्धौ प्रागभावध्वंसयो-

देवाभावात् तल्लक्षणमप्रयोजकमित्यर्थः । ननु निराश्रयत्वाद् घटादि-सत्तापि तद्बाधिकेति तौल्यमेवेति शङ्कायां घटादिसत्ताया व्यवहाराबाधकत्वं व्युत्पादयितुं तां साधयन्ति ॥ किञ्चेत्यादि ॥ उक्तयोग्यता निरवच्छिन्ना, किञ्चिदवच्छिन्ना वा । नाद्यः । व्याप्यधर्मस्य किञ्चिदवच्छिन्नत्वनियमात् । यत्र पुनस्तादृशे निरवच्छिन्नत्वं क्वचिदुपगम्यते । तत्रावच्छिन्नस्यानुपयोगादेव, न तु सर्वथा तदभावात् । अतो द्वितीयस्यैवादरणीयत्वात्तस्याः किञ्चिदवच्छेदकं व्यापकं च वक्तव्यम् । तत्र । निराश्रयत्वप्रसङ्गेन भावित्वादेर्विवादास्पदत्वादन्ततो गत्वा वस्तुसत्ताया एव तथात्वं वाच्यम् । तत्रापि तादृशाव्यवहारकाले वस्तुनि सत्त्वासत्त्वम् । ध्वंसस्याभावेन सत्तायां तादृशाव्यवहारानवच्छिन्नवर्तमानकालविशिष्टत्वं वाच्यमिति यदाकदाचिद्वस्तुसबन्धिन्या सत्तयाऽवच्छिद्यत इति चेद् ब्रवीषि तदा, यदा कदाचिदिति सत्ताविशेषणं त्यज । तत्रहेतुः—अप्रयोजकत्वाद्गौरवाच्चेति ॥ सत्तायां यदोक्तकालवैशिष्ट्यं तदानीमुक्तयोग्यतारूपावच्छेद्याभावात् सा कामवच्छिन्द्यात् । यदा चोक्तयोग्यता तदप्रयोजकं, विशेषणीभूतकालस्याभावात् तद्विशिष्टसत्ताया अभाव इति का वा तामवच्छिन्द्यात् । अतोऽनुकूलतर्काऽभावादप्रयोजकं विशेषणम् । सत्ताया नित्यत्वेऽपि वैशिष्ट्यवशेन जन्यत्वाद् गुरुभूतं च । तस्मादित्यर्थः । तथाच निराश्रयत्वमेव व्यवहारबाधकं, न तु सत्तेति भावः । एवं तदुक्तमुपगम्य दूषितम् । अतः परं विशेषोपगम एवासंगत इति बोधयितुं तल्लक्षणं दूषयन्ति ॥ तथेत्यादि ॥ तथाचात्माश्रय इति ॥ स्वरूपस्य संबन्धत्वसाधने चात्माश्रयः । स्वरूपसंबन्धस्य स्वरूपाऽनतिरिक्तत्वाङ्गीकारान्नष्टघटादिस्वरूपस्य संबन्धत्वसिद्धेर्नष्टघटादिस्वरूपसापेक्षत्वेन स्वोत्पत्त्यधीनोत्पत्तिकत्वादुत्पत्तावात्माश्रयः । यद्वासंयोगादेःकेवलस्यैवविशिष्टप्रत्ययजननयोग्यत्वेनसंबन्धान्तरमन्तरेणेतिपददानोत्तरमप्यतिव्याप्तितादवस्थ्याद्भावित्वादिवैशिष्ट्यप्रतीतिस्थले च संयोगादिप्रत्यासत्तीनामभावात् संबन्धान्तरपदे स्वरूपसंबन्धो विवक्षणीयः । तत्र संयोगादिषु संबन्धत्वस्य स्वरूपसत एव कारणत्वान्न तज्ज्ञानापेक्षा । स्वरूपसंबन्धे तु स्वरूपस्यौदासीन्ये विशिष्टप्रत्ययानुदयात्तस्य संबन्धज्ञानमप्यपेक्ष्यते । संबन्धत्वं च न संयोगसमवायान्यतरत्वम् । विशेषणतादा-

वच्याप्तेः । किन्तु विशिष्टप्रत्यययोग्यत्वमेव । स्वरूपस्य च तथात्वे ज्ञाने संबन्धत्वमिति संबन्धज्ञानाधीनं संबन्धत्वज्ञानमिति ज्ञप्तावात्माश्रय । तथाच संबन्धत्वज्ञानाभावात् सबन्धान्तरपदवैयर्थ्यम् । यदि तत्सार्थक्यायातिव्याप्तिवारणाय च संबन्धान्तरपदे षोढा प्रत्यासत्त्यभाव उपेयते तदाप्यन्यत्रातिव्याप्तिरित्याहुः ॥ नच षोढेत्यादि ॥ तद्वारणार्थं क्रियमाणं विवक्षान्तरमपि दूषयन्ति ॥ नच लौकिकेत्यादि ॥ तत्र हेतु:— सव्याप्तिरित्यादि ॥ सामान्यं च ज्ञायमानमेव प्रत्यासत्तिः । अन्यथा निमीलितनयनस्यापि, तेन धूमा इति ज्ञानापत्तेः । तज्ज्ञानं चेन्द्रियसंबन्धेन । स च संबन्धः संयुक्तसमवायो वा, इन्द्रियसंबद्धविशेषणता वा, तदन्यतरेण पूर्वं धूमत्वज्ञानम् । ततो ज्ञायमानेन तेन धूमत्वेन सामान्येन यावद्धूमा इत्याकारकं ज्ञानं, ततस्तेषु वह्निव्याप्तिवैशिष्ट्यज्ञानम् । तच्च योगजधर्मजनितानागतातीन्द्रियादिविषयकज्ञानवच्च लौकिकविलक्षणम् । इन्द्रियसंबद्धविशेषणताजन्यत्वादृग्ज्ञानसादृश्यात् । तच्च सामान्यप्रत्यासत्तिप्रयुक्तमिति तस्यामतिव्याप्तिरित्यर्थः । एतद्वारणाय क्रियमाणं विवक्षान्तरं दूषयन्ति ॥ नच जन्येत्यादि ॥ जन्या ज्ञानलक्षणसंयोगादिरूपा, लौकिकी समवायादिरूपा । तथात्वं विशिष्टप्रत्ययजननयोग्यत्वं न तु लौकिकतज्जननयोग्यत्वम् । तथा सति योगजधर्मेऽतिव्याप्त्यभावेन ग्रन्थाऽसंगत्यापत्तेः । योगजधर्मपदं सामान्यलक्षणाया अप्युपलक्षकम् । यदि च जन्यपदेन योगजधर्मोऽपि संगृह्यते तदा सामान्यलक्षणायामेवातिव्याप्तिरिति तन्नोटङ्कितम् । यदि च जन्यपदं लौकिकप्रत्यासत्तिविशेषणं, तथात्वं च लौकिकतज्जननयोग्यत्वम् । तदा समवायेऽतिव्याप्तेर्ग्रन्थासंगतिरिति लौकिकतज्जननयोग्यत्वं न विवक्षणीयम् । तदापि योगजधर्मपदं समवायादेरप्युपलक्षकम् । वस्तुतस्तु, नच जन्येत्यत्र अकारः पतित इति प्रतिभाति । सामान्यलक्षणायामतिव्याप्तेरुक्तत्वात् । तद्वारणाय जन्यपदस्यैव वक्तव्यत्वादिति । तदा लौकिकपदं षोढाप्रत्यासत्तिपरम् । योगजधर्मपदं ज्ञानलक्षणाया अप्युपलक्षकम् । यदि चाकारं प्रश्लिष्य तथात्वं यदि लौकिकत्वमपि विवक्ष्यते तदा तु वक्ष्यमाणप्रासिद्धिरेव दूषणमिति बोध्यम् । स्फुटमन्यत् । इदं च विवक्षाद्वयं मज्जतः फेनावलम्बनरूपमित्यनास्थया दूषितं ज्ञेयम् । एवं लक्षणेन कल्प्यस्य सविशेषस्य

लक्षणदूषणेन स्वरूपमेव दूषितं ज्ञेयम् । ननु माऽस्तु विशेषादिस्तथापि भावित्वादिप्रतीतिस्तूपपादनीया । सामग्र्यन्तराभावाद्भावित्वादिधर्मादेवाङ्गीकरणीया । तथा सति क्लृप्तप्रत्यासत्त्यभावेऽपि तथात्वमत्रैव सिद्धमिति नाप्रसिद्धिरित्यत आहुः ॥ विवादेत्यादि ॥ सत्यं प्रतीतिर्जायते, तथापि स धर्मो निराश्रयत्वे स्वस्वरूपमलभमानो न तां जनयितुं शक्त इति तेन दूषणेन प्रयोजकेन कारणव्यापारात् पूर्वं तद्धर्मव्यवहारकालेऽपि सन् अनुभूयमानधर्मकत्वात् । वर्तमानकालीनघटवदित्यादीनां सांख्योक्तरीतिकाभ्यामनुमानतर्काभ्यां वक्ष्यमाणागमेन वा समुदितैर्वा धर्मिज्ञानेन तत्समवेतं यद्युक्तप्रतियोगित्वं वर्तमानप्रागभावादिप्रतियोगित्वं तदपि संयुक्तसमवेतसमवायेन विषयीभवतीति भावित्वादेर्विषयत्वेनैव जनकता । प्रत्यासत्तिस्तु संयुक्तसमवेतसमवाय एवेति नोक्तप्रत्यासत्त्यभाव इत्यर्थः । एवं युक्त्या धर्मिसत्तासाधनेनान्योन्याश्रये निवृत्ते आविर्भावादेरपि सिद्ध्या शून्यवादापत्तिः परिहृता । सांख्योक्तरीतिस्तु—असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् * शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यमितिकारिकाव्याख्याने वाचस्पतिमिश्रैः स्फुटीकृता । तथाहि । कार्ये हि वादिनां विप्रतिपत्तयो बहुविधाः । असत अलीकादेव सज्जायते । श्रुतिश्च, असद्वा इदमग्र आसीत्ततो वै सदजायतेति बाह्याः । एकस्य सतो विवर्तः कार्यजातं, न वस्तु सदिति मायावादिनः । अन्ये तु, सतः असज्जायत इति । सतः सज्जायत इति सांख्यवृद्धाः । तत्र नाद्यः । कार्ये कारणतादात्म्यस्य लोके दर्शनात् सुखदुःखमोहभेदशब्दाद्यात्मकस्य कार्यस्य निरुपाख्यालीकतादात्म्यानुपपत्तेः । वैलक्षण्यात् सदसतोः । न द्वितीयः । अद्वयस्य सतो नानात्वानुपपत्तेः । प्रपञ्चप्रतीतेर्भ्रमत्वापत्तेश्च । असति बाधके तस्या भ्रमत्वायोगात् । न तृतीयः । सदसतोरैक्याभावेन तादात्म्यानुपपत्तेः । अतश्चतुर्थमेव प्रतिजानीते ॥ सत्कार्यमिति ॥ कारणव्यापारात् प्रागपि सदित्यर्थः । न च सिद्धसाधनम् । कारणानामभिव्यञ्जकत्वात् । अभिव्यक्तिः प्राकट्यं, स एव च कारणाद्विवेचकः । सोऽपि लौकिकप्रत्यक्षविषयत्वं, तदेवाविर्भाव इति तज्जनकत्वादित्यर्थः । नच बीजमृत्पिण्डादिप्रध्वंसोत्तरमङ्कुरघटाद्युत्पत्तिदर्शनात् प्रध्वंसस्य कारणत्वं शङ्क्यम् । तस्य भावत्वेना-

न्यत्रापि सुलभतया बीजादिकं विनापि तत्प्रसङ्गात् । अतो बीजाद्य-वयवस्यैवम् अवधेर्नियतत्व इत्यनेन अतत्कारणत्वम् । इदमेव नियतावधिककुसुमाञ्जलावपि प्रोक्तं—हेतुभूतनिषेधो न स्वानुपाख्यविधिर्न च * स्वभाववर्णना नैवमवधेर्नियतत्वत इत्यनेन। अतः परं विनाशस्य सहकारित्वं बीजाद्यवयवानामेव कारणत्वं, ततोऽसतः कार्यस्य जन्मेतिकणभक्षाक्षचरणमतवशिष्यते। तद् दूषयति ॥ असदकरणादित्यादिना ॥ असतः कारणव्यापारात् प्राग् अविद्यमानस्यासद्रूपस्य अकरणात् सद्रूपेण कर्तुमशक्यत्वात् । नीलरूपस्य पीतत्ववत् सदसत्त्वे वस्तुनो घटादेधर्माविति चेत्, तथाप्यसति धर्मिणि धर्मस्य वक्तुमशक्यत्वात् तदनुरोधेन कारणव्यापारात् प्रागपि सत्त्वमेवाङ्गीकार्यम् । इदमेव दूषणं, भावित्वादेर्निराश्रयत्वसाधने विद्वन्मण्डने प्रपञ्चितं बोध्यम् ॥

किञ्च, असत्त्वं न कारणे सम्बद्धं, न वा तदात्मकम्। घटश्चेत्तद्धर्मवान् तदा कारणव्यापारोत्तरं कथं कारणात्मकः स्यात् । तस्यासत्त्वस्य स्वरूपधर्मस्यानागन्तुकत्वेनापायानर्हत्वात् । अतः सदेव कार्यमास्थेयम् । तिलेषु तैलं, दध्नि सर्पिस्तथा मृदादौ घटादिरिति। अत्यन्तासत उत्पत्तेरभिव्यक्तेश्च दृष्टान्ताभावादपि । किञ्च, उपादानग्रहणात् ॥ उपादानैः सह कार्यस्य ग्रहणात् सम्बन्धात् । कार्येण सम्बद्धस्यैव कारणस्य कार्यजनकत्वादित्यर्थः । ननु कारणासम्बद्धमसदेवोत्पद्यताम् । संबद्धस्यैवोत्पत्तौ नियमाभावात् । घटादेरसंबद्धस्यैवोत्पद्यमानत्वदर्शनादिति चेत्तत्राह ॥ सर्वसंभवाभावादिति ॥ असम्बद्धस्य जन्यत्वे सर्वतः सर्वकार्योत्पत्तिप्रसङ्गादव्यवस्था। असम्बद्धत्वस्य सर्वत्राविशिष्टत्वात् । अतो घटादीनामपि सम्बन्धः कारणव्यापारात् पूर्वं वक्तव्यः। स च सत्त्व एव सम्भवतीति तदानीमपि कार्यं सदेवेत्यर्थः । नन्वसम्बद्धमपि कार्यं शक्तेन कारणेन जन्यते। शक्तिश्च कार्यदर्शनोन्नेया। तथाच यद् यत्र शक्तं तेनासम्बद्धमपि तदेव जन्यत इत्यदोष इति चेत्तत्राह ॥ शक्तस्य शक्यकरणादिति ॥ कारणाश्रया सा शक्तिः किं सर्वं प्रति शक्यं प्रति वा । नाद्यः । पूर्ववदनवस्थापातात् । न द्वितीयः । शक्यस्यैवाभावेन तस्या अशक्यवचनत्वात् । अथ शक्तिस्वभाव एव कश्चित्तादृशो यः किञ्चिदेव जनयति, न सर्वमिति चेन्न। तस्य

शक्यसम्बद्धत्वे सम्बन्ध्यपेक्षया तदानीं कार्यसत्तापत्त्या भवत्सि-द्धान्तहानिः । असम्बद्धत्वे सैवाव्यवस्थेति । अतः शक्तस्य शक्यकरणात् सदेव कार्यम् । इदं च शक्त्यङ्गीकर्तृमते दूषणं, न तु प्रागऽभावाङ्गीकर्तृमते । तद्दूषणं तु निबन्धविवृतौ सत्कृतौ सृष्टिभेदवादे च द्रष्टव्यम् । किञ्च, कारणभावात् कार्यस्य कारणात्मकत्वात् । कारणस्य सत्त्वेन कार्यमपि सदेवेत्यर्थः । अभेदसाधकानुमानप्रयोगस्त्वेवं बोध्यः—पटस्तन्तुभ्यो न भिद्यते । तन्तुधर्मत्वात् । यद्यतो भिद्यते तन्न तस्य धर्मः । यथा गौरश्वस्येति । तथा, पटः तन्त्वाभिन्नः । तन्तूपादेयत्वात् । यन्नैवं तन्नैवं, घटवत् । तथा पटस्तन्त्वभिन्नस्तन्निरूपितसंयोगरहितत्वात् । यन्नैवं तन्नैवम् । कुण्डबदरवत् । तथा पटस्तन्त्वभिन्नः । अप्राप्त्यभावात् । यन्नैवं तन्नैवम् । हिमवद्विन्ध्यवत् । तथा पटस्तन्त्वभिन्नः । तन्तुगुरुत्वातिरिक्तगुरुत्वानारम्भकत्वात् । यन्नैवं तन्नैवम् । घटवदिति । तस्मान्न तन्तुभ्योऽर्थान्तरं पट इति । नच पटस्तन्तुभ्यो भिन्नः । भिन्नप्रतीतिविषयत्वात् । भिन्नार्थक्रियाकारित्वाच्च घटवदिति प्रत्यनुमानेन पूर्वोक्तहेतूनां सत्प्रतिपक्षत्वमिति वाच्यम् । उक्तहेतूनामनैकान्तिकत्वात् । पटस्तन्त्वभिन्नः । भिन्नप्रतीतिविषयत्वात् । भिन्नव्यपदेशकत्वाच्च । वने तिलका इतिवत् । भिन्नार्थक्रियाकारित्वात् । दाहकपाचकवह्निवदिति । नच स्वात्मनि क्रियाविरोधाद्भेदसिद्धिः । कूर्माङ्गदृष्टान्तेनाविर्भावतिरोभावाभ्यामेव तदुपपत्तेरिति । एतदग्रे आविर्भावतिरोभावयोः सत्त्वमसत्त्वं वा कारणव्यापारात् प्रागिति विचारितम् । तदेव विद्वन्मण्डने प्रपञ्चितम् । तत उत्पत्तिपक्षे प्रतिबन्दी उक्तः । सा सती असती वा । आद्ये कृतं कारणैः । द्वितीये तस्या अप्युत्पत्त्यन्तरापेक्षायामनवस्था । अनपेक्षायां सत्यां सर्वदा सत्तापत्त्या कारणवैयर्थ्यम् । अथ उत्पत्तिः पट एव । तदा पट उत्पद्यत इति न वाच्यम् । पौनरुक्त्यापत्तेः । अयं प्रतिबन्दी सर्वनिर्णये श्रीमदाचार्यैरप्युक्तो बोध्यः । तस्मादुत्पत्तिः स्वकारणं समवायो वा स्वसत्तासमवायो वा । उभयथापि नोत्पद्यते । तथापि तदर्थानि कारणानि व्यापार्यन्त एव । पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम् । न च पटरूपेण कारणानां सम्बन्धः । तद्रूपस्याक्रियत्वात् । कारणानां च क्रियासम्बन्धित्वात् । अन्यथा कारकत्वव्याहतेरिति सांख्योक्तरीतिः प्रसङ्गाद्दर्शिता ॥ प्रकृतमनुसरामः ।

एवं शून्यवादापत्तिपरिहारेऽप्यनिर्वाच्यतापत्तेः प्रतिबन्द्या परिहृतत्वेन प्रतिबन्देश्चानुत्तरत्वेन तन्निरासममन्वानोऽसत्कार्यवादी वितण्डया पुनः प्रत्यवतिष्ठते ।

ननु मम तु यथाकथञ्चिद् गतिः काचन भवित्री, तव तु न कापि । तथाहि, त्वन्मते घटादेः सदा सत्त्वेन भावित्वं न वक्तुं शक्यम् । श्रुतिस्मृतिलौकिकव्यवहारसिद्धत्वेन नेष्टापत्तिः कर्तुं शक्या नच लौकिकप्रत्यक्षविषयत्वगतं भावित्वं घटादावुपचर्यतइतिवाच्यम् तस्यापि घटसमानयोगक्षेमत्वात् । न हि प्रपञ्चातिरिक्तं तत् । स्वोक्तदूषणभियापि नैवं वक्तुं शक्यम् । तथा सति घटस्यापराधः को वेति न विद्मः । तथाच जीर्णतार्णपर्णाऽऽकीर्णविविधमतभवनमये वर्णपुरे स्वयमपि वसन् दूषणदहनमुद्भावयन् निजभवनदाहं किं नानुसन्धत्से इति चेद्, वत्स ! न वेत्सि किं, युक्तिकनकपङ्कसङ्घट्टितविविधनिगममहामणिविरचितब्रह्मवादभवनं मम । तथाहि । स हैतावानास ऐतदात्म्यमिदं सर्वं, तत्सत्यं, पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् इत्यादिश्रुतिभ्यः प्रपञ्चस्य ब्रह्मात्मत्वमवगम्यते । अत्र सर्वपदेनासंकुचितवृत्तिना भूतभव्ययोरपि प्राप्तावपि तदुक्तिर्या सा पुरुषस्य नित्यत्वेन तदात्मकस्य वर्तमानदशेव सम्भवतीति भावित्वभूतत्वव्यवहारोऽप्रामाणिक इति शङ्कानिरासायेति ज्ञायते । तथा धर्माणामपि ब्रह्मरूपत्वाद् घटादिषु तदात्मकतत्सत्त्वं न विरुद्धम् । स्वतःसिद्धप्रामाण्यश्रुतिवाक्यबलात् । नन्वेवं दर्शनसमयेऽपि तद्व्यवहारापत्तिर्वैपरीत्यापत्तिश्च, विरोधोच्छेदश्चेति चेन्न । यथा पृथिव्यात्मक एव तस्मिन् गन्धात्मकतत्सत्ता, नापरस्मिँस्तथा यदा यस्मिन् यथा व्यवहाराभावनियमस्तदा तस्मिन्नेव तथाविधविरोधात्मकतत्सत्त्वमिति तथेति नोक्तदूषणगन्धोऽपीति बुद्ध्यस्व । यत्रोक्तानियमाभावस्तत्र तु न तथा ।

तथाचोक्तमाश्रमवासिके पर्वणि गान्धारीं प्रति बादरायणेन—

देवाश्च दानवाश्चैव तथा ब्रह्मर्षयोऽमलाः ॥

त एते निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे इत्युपक्रम्य, धृतराष्ट्रादिभीष्मान्तानां स्वरूपमुक्त्वा गान्धार्या दुःखनिवारणायाह ।

सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति ।

ततो द्रक्ष्यथ सर्वांस्तान् ये हताः स्म रणाजिरे, इति ॥

ततो धृतराष्ट्रपाण्डवादयः सस्त्रीकास्तत्र गत्वा स्नात्वा निशायां जातायां व्याससमीपं गताः ।

ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ।

अवगाह्याजुहावाऽथ सर्वाँल्लोकान् महामुनिः ॥

पाण्डवानां च ये योधाः कौरवाणां च सर्वशः ।

राजानश्च महाभागा नानादेशनिवासिनः ॥

ततः सुतुमुलः शब्दो जलान्ते जनमेजय ! ।

प्रादुरासीद् यथापूर्वं कुरुपाण्डवसेनयोः ॥

ततस्ते पार्थिवाः सर्वे भीष्मद्रोणपुरोगमाः ।

ससैन्याः सलिलात् तस्मात् समुत्तस्थुः सहस्रश इत्यादिना सर्वान्नामपूर्वकं निरूप्याह—

एकां रात्रिं विहृत्यैव ते वीरास्ताश्च योषितः ।

आमन्त्र्यान्योऽन्यमाश्लिष्य ततो जग्मुर्यथागतम् इत्यादि । एतच्छ्रुत्वा जनमेजयः पप्रच्छ । कथं च त्यक्तदेहानां पुनर्दर्शनमिति । तदा वैशम्पायन आह—

अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः ।

कर्मजानि शरीराणि तथैवाकृतयो नृप ! ॥

महाभुतानि नित्यानि भूताधिपतिसंश्रयाद् इत्यादि । एतदग्रे,

अविनाशी तथा नित्यः क्षेत्रज्ञ इति निश्चयः ॥

भूतानामात्मभावो यो ध्रुवोऽसौ संप्रजानताम् इत्याद्यनेक-

मुक्ताह—

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
नाहं तं वेद्मि, नाऽसौ मां, नच मेऽस्ति विरागनेति ॥

नचेदं मायया प्रदर्शितं व्यासेनेति वाच्यम् । तथा वचनाभावात् । प्रसादात्तस्य वै मुनेरिति वाक्याच्च । पतिव्रतानां तासां स्वस्वभर्तृभिः सह विहारकथनाच्च । गङ्गास्नानादिसाधनोपदेशानुपपत्तेश्च । अदर्शनादापतित इत्यत्र ल्यब्लोपे पञ्चमीति, पुनःशब्दाच्च, दर्शनात् पूर्वं वस्तुसत्ता प्राप्यते । एवं सति यद्यद्देशकालावच्छेदेन यस्य यथा प्रतीतिर्भगवतेच्छाविषयः कृताऽस्ति तत्तद्देशकालावच्छेदेन तथा प्रतीतिर्भवतीति सिद्धम् । इदं तु यथा तथा, परात्तु तच्छ्रुतेरित्यधिकरणे निरूपयिष्यामः । एतेन घटोपलम्भानुपलम्भयोः कादाचित्कत्वमनुपपन्नं, तादृशतद्धेतोर्वक्तुमशक्यत्वादितिनिरस्तम् । लौकिकप्रत्यक्षाविषयत्वेऽपि वस्तुसत्तया योगिप्रत्यक्षविषयत्वं स्यात् । भूतभाविनां वस्तूनामपि यतस्तथा तदिच्छा न तत्र चकास्ति । फलबलकल्प्या हि सा । अस्तु वा तद्विषयत्वं बाधकाभावात् । उक्तप्रमाणैर्वस्तु सत्त्वे सिद्धे तस्य न्यायप्राप्तत्वाच्च । अनागतमतीतं च वर्तमानमतीन्द्रियम् * विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिन इति वचनाच्च । एवं सत्यस्मिन् कालेऽस्मिन् देशे इदं कार्यमेवं भवत्वितीच्छाविषयत्वमाविर्भावः, तदा तत्र तथा तन्मा भवत्वितीच्छाविषयत्वं तिरोभाव इत्यपि सुवचम् । एतयोरेव उक्तयोग्यतारूपत्वात् । नच तत्तद्देशकालयोरपि नित्यत्वाद् युगपत् सकलोपलम्भप्रसङ्गोऽनुपलम्भप्रसङ्गो वा स्यादितिवाच्यम् । अस्मिन् सृष्टिकालात्मके स्थूले कालोपाधौ तदवयवात्मकतत्तत्कालोपाधौ क्रमिके तस्य तस्य पुरुषस्य तत्तदुपलम्भो भवत्वितीच्छाविषयत्वस्य तत्त्वात् । अवैतदिच्छाप्रकारमापन्नानां तत्तद्देशकालादीनाम् आविर्भावात्मकैत-

दिच्छाविषयत्वादेतदाविर्भावरूपं तेषामपि बुद्ध्यस्व । भगवदाविर्भावस्य भगवच्छक्तित्वमिति नानुपपत्तिः काचित् । एवं सति यत्कालावच्छेदेन सर्वेषां मिथोऽनुभवविषयत्वं तथा स सृष्टिकाल इत्युच्यते । सर्वत्र विशिष्टेच्छैव नियामिकेति सर्वमनवद्यम् ।

आविर्भूयारविन्दाक्षे भक्तिमाविष्करोति यः ।
सोऽव्यान्नः पितृपद्रेणुस्तिरोधानं च दुर्हृदाम् ॥

ननु ममेत्यादि ॥ न वक्तुं शक्यमिति ॥ सार्वकालिकसत्त्वाविरोधित्वान्न वक्तुं शक्यम् । ननु व्यवहारस्य गौर्वाहीक इतिवदुपचारेणापि सिद्धेः सुखेन वक्तुं शक्यत्वमिति चेत्तत्राह ॥ न चेत्यादि ॥ एकत्र मुख्यत्वसिद्धावन्यत्रोपचारो भवति । त्वन्मते सर्वस्यापि मुख्यत्वेन तस्यावकाशाभावादिति भावः । ननु त्वयेव मया तावन्मात्रस्याऽसत्त्वमेवाङ्गीकार्यमितिचेत्तत्राह ॥ त्वोक्तदूषणेत्यादि ॥ लौकिकप्रत्यक्षविषयत्वस्य तदानीमसत्त्वेन तद्भावित्वादेर्निराश्रयत्वप्रसङ्गभिया ॥ तथा सतीति ॥ तादृशविषयत्वस्याऽसत्त्वेऽङ्गीकृते सति ॥ तथाचानित्यत्वाङ्गीकारेऽपसिद्धान्तः । अनङ्गीकारे भूतभावित्वस्याऽनिर्वाच्यतापरिहार इत्युभयतः पाश इत्याशयेनाहुः ॥ तथाचेत्यादि ॥ तत्र सांख्योक्तस्य यौक्तिकत्वात् प्रतिबन्द्यामेव पर्यवसितत्वाच्च तदनादृत्य ब्रह्मवादेनैव समादधते ॥ वत्स न वेत्सीत्यादिना ॥ तथाच केवलयौक्तिकवाद एवेदं दूषणं, न तु श्रुतिप्रमाणयुक्ते वाद इत्यर्थः ॥ तदुपपादयन्ति ॥ तथाहीत्यादि ॥ नन्वेवं भावित्वादिव्यवहारस्य प्रामाणिकत्वेनावस्तु वक्तुं शक्यम् । तथापि कथं विरोधस्य परिहार इत्यत आहुः ॥ तथाचेत्यादि ॥ धर्माणामिति ॥ भावित्वभूतत्ववर्तमानत्वानाम् ॥ तदात्मकतत्सत्त्वमिति ॥ ब्रह्मात्मकभावित्वादिसत्त्वम् । विरोधो हि प्रमाणानां तुल्यबलत्वे प्रत्यक्षादीनां त्वविद्यादिपुरुषदोषदुष्टत्वेनाऽप्राबल्यात्तद्रहितायाः श्रुतेरेव प्राबल्यं श्रुत्या वा भेदेऽपि धर्मधर्मिभावस्य विरुद्धधर्माश्रयत्वस्य च मूलरूपे बोधनादत्रापि सर्वस्मिन् ब्रह्मरूपत्वस्य तयोश्चित्त्वेन त्रयाणां सत्ताबोधनात् तादृशतत्सत्त्वं न विरुद्धमिति तत्परिहार इत्यर्थः । अत्राशङ्कन्ते ॥ नन्वित्यादि ॥ एवं प्रपञ्चस्य विरुद्धतत्त्रयाधारत्वेन विरोधाभावे दर्शनसमयेऽपि भावि-

त्यादिव्यवहारापत्तिः । प्रागभावादिकाले वर्तमानत्वादिप्रतीत्यापत्तिः । सर्वदा तत्त्रितयसत्त्वात्तत्त्रितयविरोधोच्छेदश्चेत्यर्थः । अत्र समाधत्ते॥ यथेत्यादि॥ यथा येन प्रकारेण पृथिव्यात्मके ब्रह्मण्येव गन्धात्मकब्रह्मधर्मसत्ता सर्वाविद्यगन्धसत्त्वेऽपि तत्तद्देशकालावच्छेदेन तत्तदुद्भवनियता सत्ता नापरस्मिन् जलादौ नियता अनियता वा सा। तथा प्रपञ्चात्मके तस्मिन् यदा यस्मिन् यथा व्यवहाराभावनियमः यस्मिन् काले यस्मिन् देशे यदवच्छेदेन भूतभाविवर्तमानादिव्यवहाराभावनियमस्तत्काले तद्देशे तदवच्छेदेन तथाविधविरोधात्मकतत्सत्त्वं भूतादिविरोधात्मकब्रह्मधर्मसत्त्वमिति हेतोस्तथा न दर्शनसमय इत्यादिनोक्तं दूषणत्रयमित्यस्माद्धेतोर्नोक्तदूषणगन्धोऽपि नानिर्वाच्यत्वापत्त्यादीनि दूषणानीत्यर्थः । तथाचैकत्र तत्त्रियसत्त्वेऽपि तत्तदुद्भूतत्वेन व्यहारप्रतीत्योः सामञ्जस्यम् । अन्यानुद्भवेन च सहानवस्थानप्रतीत्या विरोधाऽनुच्छेदः । एवमनुच्छिन्ने तस्मिन् देशकालाभ्यां वस्तुषु नियमितेषु वस्तूनां न युगपदुपलम्भो नापि सदा तौ । एवं तयोः सातत्ये यौगपद्ये च निवृत्ते आविर्भावतिरोभावयोरपि नानिर्वाच्यत्वमिति निःशेषदूषणनिवृत्तिरिति भावः । नन्वत्र नियमस्वरूपकथने सप्तम्यन्तयत्तदाभ्यां वस्तुनिवेशो न युक्तः । विरोधस्य सार्वत्रिकत्वात् । तथा सत्यविरोधव्युत्पादनमसङ्गतमित्यत आहुः ॥ यत्रेत्यादि ॥ यथा गीतायां. केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैरित्यत्र दर्शितानां ध्वस्तत्ववर्तमानत्वयोस्तद्ध्वंसीयभावित्ववर्तमानत्वयोश्चेति । उक्तोदाहरणस्यार्जुनमात्रगोचरत्वात्तदनुक्त्वा सार्वजनीनं प्रमाणान्तरमाहुः ॥ तथाचेत्यादि ॥ अत्र च यथागतमित्यन्तेन नष्टानां शरीराणां पुनरुन्मज्जनं विहारादिरूपा चेतनक्रिया चोक्ता । तत्र पुनरुन्मज्जनकथनेन ध्वंसस्य ध्वंसाप्रतियोगित्वनिवारणात्तस्य सामयिकात्यन्ताभावरूपतया तिरोभावरूपता बोधिता ततो नैयायिकादिवज्जनमेजयस्याज्ञानं बोधयितुं तत्प्रश्न उपन्यस्तः । सामयिकात्यन्ताभावो हि प्रतियोगिनित्यत्वे भवति । तदनित्यत्वं चागोपालपण्डितं प्रसिद्धमिति कथं तस्य सामायिकत्वमिति तदाशयः । तत्र प्रतियोगिनित्यत्वं साधयितुं तत्कारणकलापनित्यत्वं वैशम्पायन आह ॥ अविप्रणाश इति, सार्द्धेन ॥ अत्र विप्रणाशपदेनाऽपाततो नाशप्रतीतिर्वस्तुतः अनाश इत्युक्तम् । अत्र

शरीराकृती कार्यभूते । कर्मणि निमित्तानि महाभूतानि समवायीनि । तथाच यथा कटसंवेष्टनहस्तमुष्टिजनकक्रियावेष्टनाद्युत्तरमपि प्रतीयमानत्वेऽपि हस्तयोगत्यागेऽपि कटप्रसारणदर्शनाद्धस्तसंयोगरक्षिता क्रियासत्ता निश्चीयते, तथाऽत्र सर्वकर्मसत्ता महाभूतनित्यत्वं, तत्र क्रियाभूतयोरेव नित्यत्वं कुत इत्याकाङ्क्षायां, भूताधिपतिसंश्रयादित्यनेनोभयोर्भगवदाश्रितत्वकथनाद्भगवद्धर्मत्वं हेतुरुक्तः । तेन नष्टशरीरोन्मज्जनमुपपादितम् । ततो विहारादिक्रियोपपादनाय शरीरेषु जीवप्रवेशं वक्तुं जीवनित्यत्वमाह ॥ अविनाशीत्यादि ॥ तत प्रवेशे हेतुमाह ॥ भूतानामिति ॥ भूतानां शरीराणामात्मभाव.—आत्मत्वेन ज्ञानमसौ संप्रजानतां ज्ञानिनां ध्रुवः वामदेवस्येव सर्वात्मभावरूपत्वात् । स एवार्थादज्ञानिनामध्रुवः । अभिमानित्वात् । तथाचानेन विद्वदविद्वत्साधारणो देहप्रवेशहेतुरुक्तः । तेन विहारादिक्रियाऽप्युपपन्नैवेत्यर्थः । ननु यद्येवं भवादृशां ज्ञानिनां, कथं तच्छरीरे मृतत्वव्यवहार इत्यत आह ॥ अदर्शनादिति ॥ न विद्यते दर्शनं यस्येत्यदर्शनं मूलकारणमक्षरम् । ल्यब्लोपे पञ्चमी । तत् प्राप्य इह संघात आगतः । यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापयन्तीति मुण्डकश्रुतेः । तथाच मूलकारणे लीनत्वात्तथा व्यवहार इत्यर्थः । अदर्शनं दर्शनाऽविषयत्वमित्यर्थेऽपि तत्र हेतुरक्षरे लयेन तदेकीभाव एवेति स एवार्थः । ततो विश्वासार्थं स्वस्य ज्ञानित्वबोधनायाह ॥ नाहमित्यादि ॥ तं संघातं शरीररूपत्वेनाहं न वेद्मि ब्रह्मवित्त्वादसौ संघातो मामात्मानं न वेत्ति चिदंशस्य तिरोहितत्वात् । च पुनर्मे विरागतापि नास्ति । ज्ञाते हि दोषदुष्टात् पुरुषाद् विरज्यते । ब्रह्मैव सर्वमिति ज्ञाने दोषस्य कुत्राप्यदर्शनान्न मे विरागता विगतो रागो यस्यासौ विरागस्तस्य भावो विरागता साऽपि सर्वस्यैवात्मत्वेन प्रियत्वान्नास्तीत्यर्थः । एवं पूर्णज्ञानित्वं बोधितम् । स्फुटमग्रिमम् । तत्रामायिकत्वेऽनुपपत्तेश्चात्यन्ताश्चत्वारो हेतवः । शिष्टस्तु शरीराख्यवस्तुसत्तायां हेतुः स्फुट एव । नन्वस्तु विरोधस्यासार्वत्रिकत्वं, तथापि नियमतदभावौ यदि स्वाभाविकौ तदा लोके तयोर्विरोधो नियत एवेत्यविरोधव्युत्पादनमसंगतमेवेत्यत आहुः ॥ एवं सतीत्यादि ॥ तथाचानियमहेतुबोधनायायमुपाख्यानोपन्यास इति । विरोधश्चैच्छिकत्वान्न स्वा-

भाविक इत्यविरोधव्युत्पादनमसंगतमित्यर्थः । ननु तथा प्रतीतिरि-च्छाहेतुरस्तु, क्रियायां तु चेतनस्यैव हेतुता । तथा सति विहारे पुनः कुतो नेत्यत आहुः ॥ इदमित्यादि ॥ तथाच तत्र जीवनिष्ठस्य कर्तृत्वस्यापि ब्रह्माधीनत्वे तु व्यासचरणैः प्रतिपादितत्वात् तत्क्रियापि ब्रह्माधीनेति तत्रापि तादृशेच्छाया एव हेतुत्वान्न बन्धापत्तिरित्यर्थः । एवमत्र हेतुनिरूपणेन यत्सिद्धं तदाहुः ॥ एतेनेति ॥

एतादृशनियमाकारव्यक्तीकरणेन कथं निरस्तमित्याकाङ्क्षायामाहुः ॥ यत इत्यादि ॥ ननु तादृशभगवदिच्छायां किं मानमित्याकाङ्क्षायामाहुः ॥ फलेत्यादि ॥ तथाच कार्यलिङ्गकानुमानमेव मानमित्यर्थः । तत्प्रयोगस्तु- भगवदिच्छा, तत्तत्कार्यजननाऽनुकूलतत्तत्प्रकारिका । तत्तत्कारणत्वात् । यद्यत्कारणं तत्तज्जननानुकूलतत्तत्प्रकारकम् । घटकारणदण्डवत् । यद्वा, एतत्कार्यम् एतज्जननानुकूलप्रकारकभगवदिच्छाजन्यम् । भगवदिच्छाकार्यत्वात् । यद्यत्कार्यं तत्तज्जननानुकूलकारणजन्यम् । दण्डकार्यघटवदित्येवं बोध्यः । ध्वस्तादीनां योगिप्रत्यक्षविषयत्वस्यादूषणत्वाय इष्टापत्त्या तत्परिहरन्ति ॥ अस्त्वित्यादि ॥ इष्टापत्तेरन्याय्यत्वपरिहारायाहुः ॥ उक्तेत्यादि ॥ अप्रामाणिकत्वपरिहारायाहुः ॥ अनागतेत्यादि ॥ तथाचात्रानागताद्युल्लेखादपि वस्तुसत्त्वैव प्राप्यत इति पूर्वोक्तं वाक्यं सामान्यलोकपरं, न योगिपरमिति, न प्रमाणयोरपीतरेतरविरोध इत्यर्थः । एवमुक्तदूषणानि परिहृत्य दूषणाभावं स्फुटीकर्तुं तेन सिद्धमाविर्भावादिस्वरूपमाहुः ॥ एवं सतीत्यादि ॥ अत्र लक्षणे कालनिवेश उपलम्भाऽऽदिसातत्यवारणाय । देशनिवेशस्तद्यौगपद्यवारणाय । कार्यनिवेशो नित्यवस्त्वाविर्भावस्यैतद्विलक्षणत्वज्ञापनाय । प्रकारनिवेशः कारणाव्यवस्थावारणायेति बोध्यम् । किञ्चास्मिन् कालेऽस्मिन् देश इत्यत्रास्मिन् कालेऽयं देशो भवत्वस्मिन् देशेऽयं कालो भवत्वित्यपि विवक्षितं ज्ञेयम् । उदाहरणं तु यथा चतुर्युगव्यवस्था भारतवर्ष एव, नेतरत्र । यथाच पञ्चमस्कन्धे भारतवर्षव्यतिरिक्तान्यष्टवर्षाणि प्रकृत्योक्तं- तत्रत्यानां त्रेतायुगसमः कालः सदा वर्तते इति । यथा चावान्तरप्रलयकाले त्रिलोकीनाश उपरितनचतुर्लोकीस्थितिरित्यादि द्रष्टव्यम् । ननु पूर्वं विषयत्वयोग्यत्वरूपं लक्षणमुक्तमिदानीं च विषयत्वरूपमुच्यत इति स्वोक्तविरोध इति शङ्कायामाहुः ॥ घ-

तयोरित्यादि ॥ योग्यता हि बाधाभावरूपा बाधाभावस्तु भगवदि-
च्छयैवेति तादृशतद्विषयत्वरूपैव सा सिद्ध्यतीति न विरोध इत्यर्थः ।
ननूपलम्भादिकादाचित्कत्वे उक्तरूपनियमो हेतुत्वेनोक्तः । स चेश्व-
रेच्छया कृत इतीच्छाया एव हेतुत्वं तेन सिद्धम् । तत्रेच्छाशरीरं प्र-
विष्टौ देशकालौ चेदनित्यौ तदा सिद्धान्तभङ्गः । यदि नित्यौ तदा
यावती सामग्र्येकैकस्योपलम्भेऽपेक्ष्यते तावती सर्वाप्यस्तीति भू-
तभाविवर्तमानकालीनानां सर्वेषां युगपदुपलम्भप्रसङ्गः । यदि च
तिरोभावस्य बाधकत्वं प्रदर्श्य स दोषो निर्वाह्यस्तदा तथैवानुपल-
म्भप्रसङ्ग इत्येवं पूर्वोक्तसर्वदूषणतादवस्थ्याल्लक्षणमसङ्गतमित्यत
आहुः ॥ नचेत्यादि ॥ तथाच लक्षणे, अस्मिन्नित्यनेन क्रमिकत्वपर्य-
न्तं कालविशेषणं संगृह्यते । एवमित्यनेन प्रकारमध्ये स स पुरुषः
संगृह्यते । इदमित्यनेन घटादिवदुपलम्भादिरूपापि सा सा कार्यव्य-
क्तिः संगृह्यत इति देशकालयोर्नित्यत्वेऽपि तदाविर्भावस्य क्रमवैशि-
ष्ट्यादिपूर्वकमेव विषयत्वमिति सुखेन तत्परिहारान्नासंगतिरित्य-
र्थः । नचेदृशेच्छैवाविर्भावोऽस्तु किं विषयपर्यन्तानुधावनेनेति वा-
च्यम् । बहु स्यां, हंत तिरोस्मानीति श्रुतौ तयोर्विषयत्वेनैव सिद्धत्वा-
त् । तयोर्भगवद्धर्मत्वेऽपि विश्लिष्टशक्तिर्बहुधेव भातीति न्यायेन सु-
द्युत्तरं जगद्धर्मत्वाविरोधात् । तदेतदक्षयं नित्यं जगन्मुनिवरा-
ऽखिलम् * आविर्भावतिरोभावजन्मनाशविकल्पवदिति विष्णुपुरा-
णेऽपि तथाङ्गीकाराच्च । नचानित्यत्वप्रसङ्गः । बोधनार्थमेवैवं कथ-
नात् । नापि विषयभेदे नानेच्छापत्तिगौरवम् । सर्वविषयकज्ञानवदि-
च्छाया अपि ऐक्यात् । प्रकर्षेणैव सर्वस्या निर्वोढुं शक्यत्वाच्चेति ।
ननु क्रमिकत्वं नाम तत्तत्कालोपाध्यवच्छिन्नाविर्भावशालित्वम् ।
आविर्भावस्वरूपं च तत्राप्येतदेवेति तज्ज्ञानेऽन्योन्याश्रयात्माश्रयदो-
षापात इत्यत आहुः ॥ अत्रेत्यादि ॥ एतदेव उक्तविशेषणविशिष्टमेव ।
तथाच तत्तदाविर्भावव्यक्तिभेदेन तज्ज्ञानभेदान्न ताविल्यर्थः । यद्वा ।
अयमर्थः । श्रुतौ हि, बहु स्यां प्रजायेयेतीच्छायाः प्रकारद्वयमु-
क्तम् । तत्र प्राथमिकप्रकारेण नानारूपाविर्भावे भगवतः सकाशा-
त् कालदेशपुरुषादिविभागः । द्वितीये प्रकर्षकथनात् तत्तत्प्रकार-
विवेकः । तथा सति प्रथमे प्रकारे अवच्छेदकाविवेकाभावान्निरव-
च्छिन्न एवाविर्भाव इति तदात्मिका । आविः प्रकटं भावयतीत्यतवि-

र्भावस्तदात्मिका तत्स्वरूपिणी या एतदिच्छा बहु स्यामितीच्छा तद्विषयत्वात्तेषामुक्तदेशकालादीनामप्येतदेव निरवच्छिन्नानुभवविषयत्वयोग्यत्वरूपमेवाविर्भावस्वरूपमिति हेतोर्बुद्ध्यस्व = सावधानीभूय तद्दूषणाभावमनुसन्धत्स्वेत्युपालम्भः । एवं दूषणपरिहारादाविर्भावादेर्नित्यत्वं साधितम् । नन्वस्तु नित्यत्वं तथापि तद्विवेकोत्तरं भावित्वादाविर्भावादेर्वस्तुशक्तित्वमेव, न भगवच्छक्तित्वमित्याशङ्कायामाहुः ॥ भगवदित्यादि ॥ सर्वस्य ब्रह्मात्मकत्वेन तदाविर्भावोऽपि भगवदाविर्भाव एवेति तस्य तथात्वमिति नानुपपत्तिः काचित् । प्रतिव्यक्तिभेदकृताप्यनुपपत्तिः सर्वस्य भगवद्रूपत्वात्, शक्तेर्नानाप्रकारत्वाच्च नास्तीत्यर्थः । वस्तुतस्तु विदिलष्टशक्तिर्बहुधेव भातीत्यादिप्रमाणेन एकस्या एव श्लेषान्नानात्वमिति भावः । ननु सर्वस्य नित्यत्वमुपगच्छतः प्रलयस्याशक्यवचनत्वात् तदभावे सृष्टेरप्यशक्यवचनत्वात् पूर्वोक्तविवक्षायां सिद्धान्तविरोध इत्याकाङ्क्षायामाहुः ॥ एवं सतीत्यादि ॥ एवं सतीति ॥ सर्वस्य नित्यत्वेऽपि भगवदिच्छया तत्तन्नियमे सति । सर्वत्र स्थूलोपाधौ तदवान्तरोपाधौ, विशिष्टेच्छैव प्रजायेयेत्युक्तेच्छैव नियामिकेति न सिद्धान्तभङ्ग इत्यर्थः ।

सर्वमुपपाद्य वादसमाप्तिं बोधयितुं श्लोकमाहुः ॥ आविर्भूयेति ॥ तिरोधानमिति ॥ कुर्यादिति शेषः ।

एवं समापिते वादे शङ्काख्यमानी क्रमिकयोरपि देशकालयोर्नित्यत्वमनुसंधाय पुनः शङ्कते ।

ननु तत्तद्देशकालयोरपि नित्यत्वात् सकलोपलम्भप्रसङ्गोऽनुपलम्भप्रसङ्गश्च स्यादितिचेत् । ननु तत्तद्देशकालावच्छिन्नतत्तत्पुरुषतत्तद्व्यवहारावपि स्त एवेति किमनुपपन्नम् ? । तर्हि तावधुनावप्युपलभ्येतामिति चेन्नैवम् । अनुपलम्भावच्छेदककालावच्छिन्नत्वात् तदवच्छिन्नस्य भिन्नत्वाद्युगपत् सत्त्वाच्च तदुपलम्भानुपलम्भयोर्युगपत् सत्त्वं न विरुद्धम् । नच योऽहं पूर्वं घटमन्वभूवं, स एवाहमधुना नाऽनुभवामीति प्रत्यभिज्ञानुपपत्तिः । सर्वस्य ब्रह्मात्मकत्वेन तस्य चैकत्वेन तदुपपत्तेः । नचैवमतिप्रसङ्गः । उपल-

म्भानुपलम्भयोरपि ब्रह्मात्मकत्वात् । स्वेच्छया यत्र तदुपलम्भन-रूपेणाविर्भवति तत्र तथा, यत्र च तदनुपलम्भरूपेणाविर्भवति तत्र तथेति नियमात् । यथा पृथिव्यामेव गन्धरूपेणाविर्भावो, न जलादिषु । अत एवाचार्यैः श्रीभागवततत्त्वदीपे, 'अथवा सर्वरूपत्वान्नामलीलाविभेदतः * विरोधांशपरित्यागात् प्रमाणं सर्वमेव हि' इति निरूपितम् । ब्रह्मणः सर्वरूपत्वेनापि वह्नेरनुष्णत्वरूपत्वेनापि, वह्निरनुष्ण इत्यादिवाक्यान्यपि प्रमाणानि । कुतः ? यतः सर्वत्राखण्डब्रह्मभानेन विरोधांशास्फूर्त्या विरोधांशस्त्यक्त एवेति वाक्यार्थः । अत एव पूर्वमेव वाचारम्भणं विकार इति निरूपितम् । ततः पूर्वोत्तरयोर्जडजीवयोः सदात्मकत्वे मध्ये हेतुमाह, स आत्मेति । एवं जडस्य तदात्मकत्वमुक्त्वा जीवस्याप्याह, तत्त्वमसीति । अस्योपदेशत्वान्मुहुरुक्तवान् । आवृत्तिरसकृदुपदेशादिति ब्रह्मसूत्रात् । अतः संपूर्णं महावाक्यमुपदेशः । तत्र यथा, ऐतदात्म्यमित्यत्र न भागत्यागलक्षणा सदंशे, तथा, तत्त्वमसीत्यत्र चिदंशेऽपि न सेत्यवगन्तव्यम् । तथाच सर्वस्यैव ब्रह्मवाक्यत्वात् तदेकदेश एव तत्त्वमसीति वाक्यं जीवब्रह्मणोरभेदं बोधयतीति न वक्तुं शक्यं वाक्यभेदप्रसङ्गाद् उपक्रमविरोधाच्च । अपरं च त्वन्मते जीवस्याऽऽभासत्वेन अलीकत्वात्, स आत्मेत्यनेन तत्पदार्थं निरूप्य, 'न त्वमसि' इत्येव वदेन्न तु तत्त्वमसीति । सत्तावाचकधातोर्मध्यम-पुरुषप्रयोगानुपपत्तिश्च । किञ्च, अविद्यया कृत्वा ब्रह्मण्यारोपितं जगत् प्रतीयते, रजतमिव शुक्तिकायामिति हि तव मतम् । तदसंभवि । आरोपे ह्यधिष्ठानज्ञानं कारणम् । अत्र च, पराञ्चि खानीति श्रुतेस्तस्याविषयत्वात् क्वारोपः ? नच ज्ञाननाश्यत्वोक्त्या अस्य ज्ञानस्य चाज्ञानमात्रनिवर्तकत्वेन अस्याप्यज्ञानकार्यत्वमुच्यते इति वक्तुं युक्तम् । विष्णुस्मरणादिना अतद्रूपाणां पापानां नाशात् ।

अस्तु वा ब्रह्मज्ञानमात्रस्याज्ञाननिवर्तकत्वम् । तच्च संसाररूपमेव, न तु प्रपञ्चः । भगवत्कार्यत्वात् । तथाच स्वरूपाऽज्ञानदेहेन्द्रियान्तःकरणप्राणाध्यासरूपपञ्चपर्वात्मकाविद्यानाशे तत्कार्यरूपाहंताममतारूपसंसारनाश एव ज्ञानकार्यं, न तु प्रपञ्चनाशोऽपि । ब्रह्मविदः स्वपुत्रादिदर्शनाभावप्रसङ्गाद्, न चैवमित्येतत्सर्वं भागवततत्त्वदीपनिबन्धे प्रपञ्चितं पितृचरणैरिति नात्र वितन्यते । वस्तुतस्तु ब्रह्मज्ञानस्य नाज्ञाननिवर्तकत्वं, क्षीयन्ते चास्य कर्माणीतिश्रुतिस्मृतिवचनात् पुण्यपापयोरपि निवृत्तिः । एतयोरप्यज्ञानकार्यत्वं पुरस्तादेव निरस्तम् । किञ्च, अविद्याया असत्त्वेनाङ्गीकारात् तन्नाशोऽप्यशक्यनिरूपणः । इतोऽपि ब्रह्मणि तत्संबन्धोऽप्यशक्यवचनः, संबन्धस्य द्विनिष्ठत्वात् । प्रकृतेचासंभवात् । तथाच कस्य केन कस्य प्रतीतिः स्यात् । विभाजिकाया एवाभावेनैव विभागस्याप्यभावात् । अत एवासन्नेव प्रतीयत इत्युच्यते इति चेद्, अहो मूढता !! यत् स्वप्नप्रतीतितरणिकिरणतापतप्तस्य तत उत्थितस्य जागरितदशादृष्टमरुमरीचिजलधिवीचिविभ्रमैस्तदुपशमाऽभिमानेन सुखिताभिमानिनो मिथ्याभिवादिनः । अततोऽपि प्रत्यायिका साऽविद्या, सा चासतीति का प्रत्याययेदिति पूर्वोक्तं श्रुत्वाप्येवं वदन् मूर्खतां नातिवर्तसे । एतेनैव कार्यानुरूपेण कारणेन भाव्यमिति कार्यस्य तुच्छत्वेन तत्कारणं तादृश्यविद्योच्यते इत्यपि निरस्तम् । कार्यस्य तु तुच्छत्वातुच्छत्वे पश्चाद्विचारयिष्यामः । संप्रति त्वद्रीत्यैव विचार्यते । कल्पना हि लोकानुसारिणी । तथाच यत्र मायाविनो नटा मणिमन्त्रादिना आम्रकदम्बतरुं दर्शयन्ति तत्र तद्दर्शिनाम्रादिकमेवासद् दृष्टमिति ज्ञायते, तत्क्षणमेव तददर्शनाद्, न तु तन्मन्त्रादिसामर्थ्यमपि । तथा सति दर्शनमपि न स्यात् । सर्वोऽपि च तथा प्रदर्शयेदविशेषात् । तस्मात् त्वदभिमताविद्या

जगत्प्रतीतिर्जीवविभागो वा न युक्तिसह इति न कर्तृत्वनिषेधो ब्रह्मणि शक्यनिरूपणः ॥

ननु तत्तादित्यादि ॥ तत्तद्देशकालयोरिति ॥ प्रागभावाद्यवस्थाभिव्यञ्जकस्य कारणात्मकस्य देशस्य क्रमिकत्वविशिष्टस्य कालोपाधेश्च नित्यत्वात् । युगपदेवैकवस्तुनिष्ठभावित्वादित्रितयोपलम्भादिः स्यादित्यर्थः । अत्र बहुवारमुद्धृतत्वात्तदुक्तदूषणमुपेक्ष्य तदुक्तमुपगम्यानित्यत्वं च स्मारयित्वा समाधातुं पृच्छन्ति—

नन्वित्यादि ॥ त्वदुक्तदेशकालमात्रनित्यत्वे किं बाध्यं, त्वदनुक्ते प्रकारकार्ये अपि ते एव वर्तेते एवेति सर्ववर्तमानत्वाद्धेतोः किं ममानुपपन्नम् । अस्मदुक्तात् किमयुक्तं दूषकत्वाभिमानिनस्तवाऽस्मदुपरि किं दूषणमवशिष्टमिति तद्वदेत्यर्थः । तत्राह, पूर्वपक्षी ॥ तर्हीत्यादि ॥ तौ देशकालप्रकारविशिष्टावेकवस्तुनिष्ठभावित्वादित्रितयविषयकव्यवहारौ अधुना वर्तमानकालेऽपि, उपलभ्येतां युगपदनुभवविषयौ क्रियेतामिति दूषणमवशिष्टमित्यर्थः । तत्र समादधते ॥ मैवमित्यादि ॥ वर्तमानावपि युगपन्नोपलभ्यतः । अत्र हेतुः अनुपलम्भेति ॥ अयमर्थः । व्यवहारोपलम्भानुपलम्भयोरेकसामग्रीकत्वं त्वदभिमतमुत भिन्नसामग्रीकत्वम् । यद्याद्यस्तदा अभावग्रहणार्थं योग्यानुपलब्धिं विशेषणतां च किमित्यधिकामङ्गीकरोषि । अथाङ्गीकरोषि तदा सामग्रीभेदस्तु सिद्धः । एवं सति यथा सा तथा कालभेदोऽपि सामग्रीति तद्भेदात् कालात्मकतद्विरुद्धसामग्र्यवच्छिन्नानां पुंसामस्माकं तदनुपलम्भाद् युगपत् त्रितयानुपलम्भादित्यर्थः । ननु कालसामग्रीत्वे युगपत् त्रितयानुपलम्भ उपपद्यतां, तथापि अनुपलम्भकाले उपलम्भसमतायां किं मानमित्यत आहुः ॥ तत्कालेत्यादि ॥ तद्व्यवहारोपलम्भानुपलम्भयोः सहावस्थानविरोधे हि तत्तत्सत्तायां मानापेक्षा, न तु घटतदभावयोरिव भावाभावविरोधेऽपि । एतयोश्च न सहावस्थानविरोधः । तत्कालस्य भिन्नत्वात् । उपलम्भावच्छेदकस्तु योगिनां कालः । तयोः परस्परं भिन्नत्वादुपलम्भानुपलम्भयोर्युगपत्सत्त्वं न विरुद्धम् । यदि चैकस्यैव कालोपाधेः प्रतियोगिभेदेन जन्ममरणविवाहसीमन्तसुखदुःखघटोपलम्भानुपलम्भजनकत्ववत्प्रातियोगिभेदेन भूतवर्तमानादिव्य-

व्यहारोपपादनक्षमत्वात् कालभेदेनोपेयते तदापि तदवच्छिन्नपुरुषस्यापि भिन्नत्वात् । पुरुषस्येति जात्यपेक्षयैकवचनम् । तथाच तत्कालोपाध्यवच्छिन्नपुरुषाणामपि भिन्नत्वाद् युगपत्सत्त्वाच्च । यथैकस्मिन् काले क्वचिदुदेष्यति क्वचिदुद्गच्छति क्वचिदुदेति सूर्ये तत्तद्व्यवहारस्य युगपत्सत्त्वं न विरुद्धमेवमत्रापीत्यर्थः । नन्वेवं पुरुषभेदेन तत्तद्व्यवहारोपलम्भानुपलम्भव्यक्त्यानन्त्यात्तयोर्युगपत् सत्त्वाविरोधो, न तन्नित्यत्वसाधकः । एकस्य पुरुषस्य योऽहं पूर्वं घटमन्वभूवं स एवाहमधुनानुभवामीति प्रत्यभिज्ञायां तयोर्भिन्नकालिकत्वेनानुभवात् । तयोरेकपुरुषनिष्ठत्वेनैककालीनत्वसाधने च तादृशप्रत्यभिज्ञानुपपत्तेरितिचेत्तत्राहु: ॥ नचेत्यादि ॥ तत्र हेतुः– सर्वस्येत्यादि ॥ एवं प्रत्यभिज्ञाया जायमानत्वेऽपि सर्वस्य ब्रह्मात्मकत्वेन ब्रह्मणश्चैकत्वेनैतस्योपलम्भकालेऽन्यनिष्ठतदनुपलम्भस्यानुपलम्भकाले चोपलम्भस्य चैतन्निष्ठत्वेनापि सत्त्वात् सिद्ध एकनिष्ठयौगपद्ये तयोर्नित्यत्वोपपत्तेः प्रमाणयोस्तुल्यबलत्वे हि विरोधतदभावचिन्ता । प्रकृते तु देहात्ममानिपुरुषनिष्ठत्वात् प्रत्यक्षं निर्बलम् । श्रुतिस्तु तद्रहितपरमाप्तपुरुषवाक्यत्वात् प्रबला । तथाच श्रुतिरूपधर्मिग्राहकमानसिद्धं नित्यत्वं यौगपद्यं च मूलाऽस्पृग्भिरापातरमणीयैरनुभवशतैर्युक्तिसहस्रैश्च न प्रतिक्षेप्तुं शक्यम् यथा त्वन्मते परमाणूनां नित्यत्वं, घटादीनां द्व्यणुकादिक्रमजन्यत्वमित्यादि तथेत्यर्थः । नन्वेवं ब्रह्मैक्यं यथा त्वन्मते सर्वनित्यत्वोपपादकं, तथैकोपलम्भादिव्यक्तेः सर्वगतस्याप्युपपादकमित्येकस्योपलम्भाद्यवसरे सर्वेषां तदापत्त्या सर्वेषां सर्वज्ञतापत्तिरूपातिप्रसङ्गापात इत्यत आहुः ॥ नचैवमित्यादि ॥ आत्मसमवेतस्यापि ज्ञानस्य प्रदेशवृत्तित्वं तवाप्यभिमतम् । अस्माकं तु तद्भगवदिच्छया नियतमिति न कथमप्यतिप्रसङ्गावकाश इत्यर्थः । एतादृशनियमे किं मानमिति शङ्कायां यथा तव मते प्रागभावस्तथाऽस्माकं भगवदिच्छा । फलबलकल्प्यत्वस्योभयत्रापि तौल्यात् । अस्माकं श्रुतिपुराणाद्युपष्टम्भस्याधिक्यात् तदनुसार्यनुमानमपीत्याशयेन दत्तोत्तरत्वं स्मारयन्ति ॥ यथेत्यादि ॥ एतेनैव नित्यकार्यविवेकाभावेऽपि दत्तोत्तरम् । इदं नित्यत्वेन व्यवह्रियतामिदं कार्यत्वेनेत्यैच्छिकनियमस्य तत्रापि समानत्वात् । एवमन्या अप्यनुपपत्तयो भगवदिच्छास्वरूपविचारेणैव ब्रह्मवादे परिहरणीयाः ।

प्रजायेयेतीच्छाशरीरे प्रविष्टस्य प्रकर्षस्यातिपिचण्डिलत्वेन तस्य समाधानसमर्थत्वादिति दिक् ।

नन्वेवमपि त्वया नियमान्मास्तु रूपप्रपञ्चेऽतिप्रसङ्गस्तथापि नामप्रपञ्चे दुर्वारः । ब्रह्मणः सर्वरूपत्वेन तत्तदभावोभयधर्मकत्वादज्ञे सर्वज्ञत्वस्य, सर्वज्ञेऽज्ञत्वस्य, नित्ये कार्यत्वस्य, कार्ये नित्यत्वस्य सद्भावाद्विपरीतप्रयोगेऽपि प्रामाण्यस्यानपायेन वाक्यप्रामाण्याऽप्रामाण्यव्यवस्थाभङ्गप्रसङ्गादित्याशङ्कायामिष्टापत्त्या समादधते ॥ अत एवाचार्यैरित्यादिना ॥ यतोऽयमतिप्रसङ्ग इष्टः, अत एवाचार्यैस्तथा निरूपितमित्यर्थः । वाक्यार्थस्तु– वेति पक्षान्तरं । पूर्वं विविदिषायां यत्प्रमाणत्वेन विवक्षितं तत्सर्वं, वेदाः श्रीकृष्णवाक्यानीत्यादिनोक्तम् । अथ विद्वद्दशायां, प्रमाणं सर्वमेव हि वाङ्मात्रमेव प्रमाणमित्यर्थः । ननु कथं परस्परविरुद्धानां वह्निरनुष्ण, परं ब्रह्म विष्णुशिवब्रह्माकारं निराकारमित्यादीनां प्रमाण्यमित्याकाङ्क्षायामाहुः ॥ सर्वरूपत्वाद्विरोधांशपरित्यागादिति ॥ तथाच भगवतः सर्वरूपत्वेन वह्निरूपत्वादनुष्णरूपत्वाच्चानुष्णवह्नित्वयोरैकाधिकरण्याच्छिवत्वादीनामप्यैकाधिकरण्याद्वह्निरनुष्णः, ब्रह्मविष्णुशिवाकारमित्यविरुद्धमित्यर्थः । तदेतदुक्तं– ब्रह्मणः सर्वरूपत्वेत्यादिना ॥ इदं चाग्रे व्युत्पाद्यम् । अत्र प्रकृतानुपयोगान्न व्याख्यातम् । परं तु निबन्धटीकाऽनुसारेणोच्यते ॥ * नामलीलाविभेदत इति ॥ रूपलीलावन्नामलीलाविभेदनो विरुद्धांशपरित्यागात् । यथा रूपलीलायां, पूर्ववद्वत्यधिकरणे निराकारमेव ब्रह्म प्रथमं पुरुषरूपेण, ततः शक्तिरूपेण, ततः कार्यरूपेण जायत इत्युच्यते, तथा नामापि क्रमेण तादृशतादृशवाक्यरूपेण जायत इति सर्वाणि वाक्यानि ब्रह्मबोधकत्वादविरुद्धानीति वाङ्मात्रं प्रमाणमित्यर्थ इति । प्रासङ्गिकं परिहृत्य प्रस्तुतं महावाक्यमेव निर्णेतुं कार्यदशायामपि सर्वस्य ब्रह्मत्वश्रुतेः संमतिमाहुः ॥ अत एवेत्यादि ॥ यतः सर्वस्य ब्रह्मात्मकत्वेनैकरूपत्वमेव श्रुत्याभिप्रेतं, न तु कार्यरूपत्वेन नानात्वमत एव हेतोः प्रपाठकारम्भ एव वाचा आरम्भणम् । घटः पट इत्यादिकथनं विकारो विकृतिर्नामधेयं नाममात्रं, न तु तेन रूपेण वस्तु तत्, किन्तु मृत्तिकेत्येव कारणरूपेणैव सत्यमित्युक्तम् । तथाचाऽविद्वद्दशायामेव नानात्वं, न विद्वद्दशायामित्यर्थः ॥ तत इति ॥ सत्यत्वकथनोत्तरम् ॥ स आत्मेति ॥ स एव जडस्य जीवस्य चा-

ऽऽत्मा अनारोपितानागन्तुकस्वरूपेणेति । ऐतदात्म्यमित्यादेः । उपदेश इत्युद्देश्योल्लेखः । सिद्धमाहुः ॥ तत्रेत्यादि ॥ स य एषोऽणिमेत्येतेन जगन्मूलं तमणुभावरूपं सत्पदार्थं परिचाय्य ऐतदात्म्यपदार्थाखर्मरूपताम् इदम्पदार्थाकारादिकं च त्यक्त्वा केवलसन्मात्रता न बोध्यते । तदुभयत्यागे ऐतदात्म्यसर्वपदयोर्वैयर्थ्यप्रसङ्गात् । किन्तु तत्पूर्वकमेव तथात्वं बोध्यत इति यथा सदंशे नानाङ्गीक्रियते तथा चिदंशेऽपि प्रायपाठबलात् तस्य भावस्तत्त्वमिति भावार्थप्रत्ययः । अप्रयुज्यमानेऽपि युष्मच्छब्दे मध्यमपुरुषोपपत्तिं चानुसन्धाय तदभावोऽवगन्तव्यः । एवं सिद्धे सर्वस्य ब्रह्मवाक्यत्वे लक्षणां विनैव तादात्म्येन सर्वस्य ब्रह्मत्वोपपत्त्या प्रतिज्ञादिसिद्धौ सर्वस्यैव ब्रह्मावबोधकत्वं युक्तं, न तु लक्षणया तदेकदेशस्य जीवब्रह्माभेदबोधकत्वं युक्तमित्यर्थः । ननु यथा तत्र पदवैयर्थ्यं तदभावगमकं, तथा तत्त्वमसीत्यत्र किं तदभावगमकमित्यत आहुः ॥ वाक्यभेदप्रसङ्गादिति ॥ रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवद्बुद्धिकल्पितेभ्यः सदवयवेभ्यो विकारसंस्थानोपपत्तिमङ्गीकृत्य ऐतदात्म्यमित्यस्य विभेदव्यासेधकत्वं, तत्त्वमसीत्यत्र भागत्यागलक्षणया जीवब्रह्माभेदबोधकत्वमित्येवमर्थभेदेन विभागे साकाङ्क्षत्वाभावेन च तत्प्रसङ्गादित्यर्थः । नन्वेवमर्थभेदेऽपि प्रकारभेदेन ब्रह्माभेद एव बोध्यते इत्याकाङ्क्षासत्त्वादेकवाक्यतोपपत्तेर्न तत्प्रसङ्ग इत्यतो हेत्वन्तरमाहुः ॥ उपक्रमविरोधादिति ॥ उपक्रमे हि, सदेव सोम्येदमग्र आसीदित्यादिना ब्रह्मणः सविकारमकजडजीवोपादानता बोधिता । न हि सा विवर्तवादे, अभेदे चोपपद्यते । विवर्त्तोपादानताया अभ्युपगमैकशरणत्वात् । अभेदे त्वयापि तदनङ्गीकाराच्च । एवं तदुक्तमनुपगम्य दूषणमुक्तम् । एवं तापनीयेऽपि बोध्यम् । तत्रारोपविभूतिव्यपदेशपक्षैः प्रजापतिर्जीवस्य ब्रह्माभेदं खण्डाष्टकेन बोधितवान् । तदिदं रहस्यं श्रुत्वा प्रणववाच्यं सिंहं परमेश्वरं स्वात्मत्वेन जिज्ञासुभिर्देवैर्नवमखण्डे विज्ञापितः सोऽद्वयात्मस्वरूपं सिंहमुपद्रष्टानुमन्तेत्यादिना व्याकुर्वन्नभेदप्रतीतेर्भ्रमत्वाय तज्जनकाविद्यास्वरूपं तमोरूपेत्युक्त्वा तदेतज्जडमोहात्मकमनन्तं तुच्छमिदं रूपमस्या व्यञ्जिका नित्यनिवृत्तापि मूढैरात्मेव दृष्टास्य सत्त्वमसत्त्वं च दर्शयन्ति सिद्धत्वाऽसिद्धत्वाभ्याम् । स्वतन्त्रत्वेनैषा वटबीजसामान्यवदनेकवटशक्तिरेकैव । तद्यथा वट-

बीजसामान्यमेकमनेकान् स्वाव्यतिरिक्तान् वटान् स्वबीजानुस्याद्य तत्र तत्र पूर्णं संतिष्ठत्येवमत्रैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वेत्यन्तेन जडमोहात्मप्रपञ्चदर्शकत्वं वटबीजदृष्टान्तेन वैलक्षण्यं चोक्त्वा, जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति तत्कार्यमुक्त्वा, सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्ना अङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं योनित्वमपीत्याह । अत्र चैतन्यदीप्तत्वकथनाच्छ्रुत्यन्तरोक्तजलचन्द्रदृष्टान्तेनांशप्रवेशद्वारा कार्यजीवेश्वरकर्तृत्वं सप्तम्यर्थे मत्वर्थीयेन चैतन्यगुणसम्बन्धेन दीप्त्वा आभासाभास्ययोः समानाकारत्वनियमाभिप्रायेणात्मन एव त्रैविध्ययोनित्वकथनेन तस्या दर्शकत्वमात्रं, न तु जनकत्वमिति बोधितम् । अतोऽत्रापि जडजीवयोर्ब्रह्मभिन्नत्वं तादात्म्येन सिद्ध्यति, न तु ब्रह्मणो जीवाभेदः । जननानन्तरमेव दर्शकत्वाद्भिन्नत्वजडत्वस्वतन्त्रत्वादिना दृश्यमानस्य, स्वतन्त्रत्वाऽस्वतन्त्रत्वेत्यनेन मीमांसकसांख्यवैशेषिकादिप्रतिपन्नस्यान्तरासृष्टिरूपत्वेन मिथ्यात्वं, न तु सर्वस्येत्यपि । तेन भेदस्य यदतात्त्विकत्वमज्ञानकृतत्वं चोक्तं तत्स्वाभाविकत्वेनाभिमन्यमान एव तस्मिन् पर्यवस्यति, न तु तादात्म्यशरीरप्रविष्टे भेदे । एवञ्च व्यावहारिकस्मार्तः प्रपञ्चः स्वापेक्षयोत्कृष्टसत्ताकप्रपञ्चपूर्वकः । मायिकत्वात् । ऐन्द्रजालिकप्रपञ्चवदिति पूर्वोक्तश्रुतिमूलकानुमानेनापि ब्रह्मात्मकजगत्सिद्धेस्तदुक्तप्रमाणाभासीकृतं ज्ञेयम् । अतः परं तदुक्तिमुपगम्यापि तथात्वं साधयन्ति ॥ अपरञ्चेत्यादि ॥ तथाच हेयत्वावचनाच्चेत्यत्र भाष्ये सांख्यं प्रति यद्दूषणमुक्तं तेनापि त्वदभिमतप्रमाणस्याऽऽभासतेत्यर्थः । दूषणान्तरमाहुः ॥ सतेत्यादि ॥ आभासादेर सत्यत्वात्कर्तुर्निरविद्यत्वेन तद्दर्शनायोगाच्च तथेत्यर्थः ॥

अथात्र प्रसङ्गाद्रामानुजमतं लिख्यते । चिदचिदीश्वर इति वस्तुत्रयं भिन्नस्वभावम् । तत्राचिद्वस्तुनश्चिद्वस्तुनः परब्रह्मणश्च भोग्यत्वेन भोक्तृत्वेनेशितृत्वेन च स्वरूपविवेकश्रुतय आहुः— अस्मान्मायी सृजते विश्वमेतत्तस्मिँश्चान्यो मायया सन्निरुद्ध इत्याद्याः । तेन त्रयाणां भेदः सिद्धः । यः पृथिव्यां तिष्ठन् यो रेतसि तिष्ठन् य आत्मनि तिष्ठन् इत्यन्तर्यामिब्राह्मणे पृथिव्या रेतआदीनां पृथिवीका-

यांणां च पृथगुल्लेखात् सर्वावस्थितस्याचितः आत्मतदुल्लेखाद् बद्ध-मुक्तोभयावस्थस्याचिद्धोक्तुश्चितश्च परमपुरुषशरीरत्वम् । तेन त-न्नियम्यत्वं तेनापृथक्स्थितिं च दर्शयति । इदं शारीरसौबालवाक्ये-ऽन्तर्यामित्वश्रवणोत्तरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इति परमपुरुषस्यापहतपाप्मत्वादिविशिष्टनारायण-रूपेणात्मत्वं श्रावयति । तेनाचितश्च सर्वावस्थासु तच्छरीरत्वाच्छ-रीर्यविनाभावः सिद्ध्यति । तथा सति तयोः शरीरशरीरिणोर्गोत्व-वत्सर्वदा अविनाभावः, परन्तु दृष्टान्ते विशेष्यस्यानित्यत्वं दार्ष्टान्तिके तु विशेषणस्येति विशेषः । एवं सति, सदेव सोम्येदमग्र आसी-दित्यादौ सत्पदेन परं ब्रह्मैवोच्यत उत अचिच्छरीरविशिष्टं तदुच्यत इति संदेहेऽपि तादृशे सौबालवाक्ये अन्तःप्रविष्टो यः सृजत इति श्रवणात् तेन छान्दोग्यवाक्योपसंहारे अचिच्छरीरविशिष्टस्यैव परस्योपादानत्वं कर्तृत्वं च सिद्ध्यतीति कार्यावस्थकारणावस्थस्थूल-सूक्ष्माचिद्वस्तुशरीरो बद्धमुक्तावस्थचिद्वस्तुशरीरश्च परमपुरुष एवेति कारणात् कार्यस्यानन्यत्वेन कारणाविज्ञानात् सर्वविज्ञान-मभिसंहितमुपपन्नतरम् । अत एव, च जगतो ब्रह्मोपादानकत्वम् । अत एव च सर्वेषां शब्दानां ब्रह्मवाचिना शब्देन सामानाधिकरण्यं मुख्यं शास्त्रमित्यादि ॥ अत्र यद्यपि प्रतिज्ञोपपद्यते तथापि दृष्टान्तोप-रोधो दुर्वारः । अत एव, स आत्मानं स्वयमकुरुतेति श्रुतिः । प्रकृति-श्च प्रतिज्ञा दृष्टान्तानुपरोधात्, आत्मकृतेः परिणामादिति श्रुतिसूत्रवि-रोधोऽपि तथेति दिक् । एवमेव मध्वमते बोध्यम् । प्रकृतमनुसरामः ।

एवं जीवब्रह्माभेदबोधने प्रमाणस्याभासत्वं स्फुटीकृत्य तदभि-मताविद्याबोधनेऽपि तस्याभासत्वं स्फुटीकर्त्तुमविद्यया जगत्प्रतीतिं दूषयन्ति ॥ किञ्चेत्यादि ॥ नचाप्रत्यक्षेऽप्याकाशे तलमलिनिमारोप-वद् ब्रह्मण्यपि जगदारोपः संभवतीति वाच्यम् । अवकाशरूपेण वस्तुसामर्थ्यादेव प्रत्यक्षत्वात् । अन्यथाऽवकाशाद्यभिलापोच्छेदप्र-सङ्गात् । अविदुषां केनापि प्रकारेण ब्रह्मणस्तदभावादितिवैषम्या-त् । ननु, ज्ञानेन भूयोऽपि च तत् प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा * इत्यादिप्रपञ्चस्य ज्ञाननाश्यत्वोक्त्या तथोच्यत इत्यत आहुः ॥ नचेत्यादि ॥ अस्यापि जगतोऽपि ॥ विष्णुस्मरणादनेत्यादिपदेन, न मां कर्माणि लिम्पन्तीत्यादिज्ञानसंग्रहः ॥ अतद्रूपाणामिति ॥

अज्ञानकार्यव्यतिरिक्तरूपाणाम् । तथाच ज्ञानत्वेनाज्ञानमात्रकनिवर्त्तकत्वेन नियमे तत्कार्याणां पापानां नाशाभावेन स्मृतिविरोधः । तेषामप्यज्ञानकार्यत्वाङ्गीकारे पापनाशवत् प्रपञ्चमात्रनाशापत्त्या स्मृतिप्रत्यक्षाविरोध इत्यर्थः । ननु ब्रह्मज्ञानत्वेनाज्ञानमात्रनिवर्त्तकत्वेन व्याप्तिर्वाक्यबलादङ्गीक्रियते, न तु ज्ञानत्वेनातो ज्ञानान्तरस्येतरनाशकत्वेऽपि न दोष इत्याकाङ्क्षायामन्तरासृष्टिस्तद्विषय इत्याशयेन तदुक्तमभ्युपगच्छन्ति ॥ अस्तु वेत्यादि ॥ वेत्यनादरे ॥ तच्चेत्यादि ॥ ज्ञाननिवर्त्त्यं भावरूपाज्ञानं च संसाररूपमेव अभिमानात्मकमेव । नैवात्मनो न देहस्य संसृतिः सुविवक्तयोः * अविवेकस्तयोर्योऽसाविह तस्यैव संसृतिरिति भगवता देहात्मानौ पृथगुक्त्वा तदविवेकस्यैव संसारकथनात् । तेन, य एष संसारतरुः पुराण इत्यत्रापि, द्वे अस्य बीजे शतमूलस्त्रिनाल इति द्विबीजस्य सांख्यप्रतिपन्नस्यैव, मायामयं वेद स वेद वेदमित्यनेन मायमयत्वमुच्यते । वास्तवभेदाश्रयणात् । तस्या अन्तरासृष्टिरूपत्वात् । न तु ब्रह्मकार्यस्य तस्य तथात्वम् । एतेनैव ये एकादशस्कन्धादिषु देहं प्रकृत्य, निरूपितेयं त्रिविधा निर्मूला भातिरात्मनीति, प्रपञ्चं प्रकृत्य, त्वय्यद्वितीये भगवन्नयं भ्रम इति, विकारं प्रकृत्य, आद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये इत्यज्ञानभ्रमासच्छब्दाः प्रपञ्चे प्रयुक्ताः स्तेऽपि व्याख्याता बोध्याः । तदेतद् हृदि कृत्वाऽऽहुः ॥ तथाचेत्यादि ॥ अहंताममतारूप इति ॥ अहंताममते रूपयतीत्यहंताममतारूपः अभिमत्यात्मक इत्यर्थः ॥ न चैवमिति ॥ न स्वपुत्रादिदर्शनाभावः । एवं संसारप्रपञ्चयोर्भेदमङ्गीकृत्य तदुक्ता व्याप्तिरङ्गीकृता । अतः परं तस्याऽप्रयोजकत्वं बोधयितुमाहुः ॥ वस्तुत इत्यादि ॥ नन्वेवं सति मिथ्याज्ञानसलिलावसिक्तायामेव हृदयभूमौ कर्मबीजप्ररोहाद् ब्रह्मज्ञानत्वेनाऽज्ञानकार्यनिवर्त्तकत्वेन व्याप्तिर्नाप्रयोजिकेत्यत आहुः ॥ एतयोरित्यादि ॥ एतयोः पुण्यपापयोरज्ञानकार्यत्वमज्ञानपरिणामत्वं पुरस्तादेव प्रपञ्चस्य भगवत्कार्यत्वबोधकश्रुतिविचार एव निरस्तम् । तथाच व्याप्तिरप्रयोजिकैवेत्यर्थः । प्रकारान्तरेणापि तथात्वमाहुः ॥ किञ्चेत्यादि ॥ ननु कार्यस्वरूपबलात् तथाङ्गीक्रियत इतिचेत् तत्राहुः ॥ एतेनेत्यादि ॥ एतेनेति ॥ तत्स्वरूपासत्त्वेन । नन्वेवं सति श्रुत्युक्तस्य तुच्छत्वस्य का गतिरित्यत आहुः ॥ कार्यस्येत्यादि ॥ पञ्चादि-

ति ॥ ग्रन्थसमाप्तिदशायाम् । इदानीं कुतो न विचार्यत इत्याकाङ्क्षायां तुच्छत्वाङ्गीकारेऽपि त्वन्मतस्य दूषयितुं शक्यत्वान्न विचार्यत इत्याशयेनाहुः ॥ संप्रतीत्यादि ॥ स्वद्रीत्येति ॥ तुच्छत्वाङ्गीकारपूर्वकम् सिद्धमाहुः ॥ तस्मादित्यादि ॥ तस्मादिति ॥ अत्यन्तयुक्तिविरुद्धत्वात् ॥

एवं तुच्छत्वाङ्गीकारेऽपि जगत्प्रतीत्यादिरूपतत्कार्यासिद्धिं प्रदर्श्यानुपाधित्वादिति हेतुः साधितः । तत्र प्रमाणस्याभासतासंपादने महावाक्ये भागत्यागलक्षणामनादृत्य जीवस्य ब्रह्माभेद उक्तो, जीवस्वरूपं तु नोक्तमिति तमनुपपन्नं मन्वानस्तमादाय श्रुतार्थापत्यभिमानेन स्वोक्तं समर्थयिष्यन् पुनः प्रत्यवतिष्ठते ।

नन्वास्तां शुद्धमेव ब्रह्म जगत्कारणं, तेन सहाभेदो जीवस्य कथं श्रुत्या बोध्यते । परस्परं विरुद्धधर्मत्वादुभयोः, परमार्थयो भिन्नयोरभेदासम्भवश्च । नचौपाधिकत्वेन भेदस्य तदपगमे तत्संभव इति वाच्यम् । पूर्वोक्तन्यायेनोपाधेरेव निर्वक्तुमशक्यत्वात् । नच तात्त्विकभेदवतोरपि पाथसोर्मिलने सत्यभेदप्रतीतिवत् प्रकृतेऽपि, नद्यः प्रविष्टा इव नामरूपे इति वचनाद् ब्रह्मसम्बन्धे सति जीवस्तस्माद् भिन्नतया न प्रतीयत इत्याशयेन अभेदः श्रुत्या बोध्यत इति वाच्यम् । तयोरनन्त्यावयविसावयव्येकजातीयद्रव्यत्वेन उभाभ्यामेकं स्वसजातीयं कार्यमुत्पाद्यत इति युक्तं तदभेददर्शनम् । प्रकृते तूभयोरपि महत्त्वे सति निरवयवत्वेनारम्भकत्वासंभवाच्च, न तथा वक्तुं शक्यम् । अविनाशी वारे अयमात्मा अनुच्छित्तिधर्मेति श्रुतेर्नाशासम्भवाच्च । किञ्च, जीवब्रह्मणोः कः सम्बन्धः ? । न तावत् संयोगः । तयोर्विभुत्वेन तदनङ्गीकारात् । न समवायः । अनाश्रितत्वादुभयोः । नापि स्वरूपसम्बन्धः । तस्य सार्वदिकत्वेन सर्वदा जीवानुपलब्धिप्रसङ्गात् । किञ्च, अणुजीवपक्षेऽपि ब्रह्मणो व्यापकत्वात् सकलजीवसम्बन्धस्य सार्वदिकत्वात् कदापि न ते प्रतीताः स्युः । नापि ब्रह्मसाक्षात्कारान-

न्तरमेव जीवस्य ब्रह्मभावो, ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुत्या प्रतिपाद्यते इति ज्ञातृज्ञेयभाव एव सम्बन्धो वाच्यः । पारमार्थिकभेदस्यैतदनपनोद्यत्वात् । अन्यथा देवदत्तविष्णुमित्रयोरप्यभेदापत्तिः । किञ्च, सम्बन्धस्य द्विनिष्ठत्वात् संसारिणमपि जीवं ब्रह्म जानाति इति ज्ञातृत्वसम्बन्धस्य तादृशे जीवेऽपि सत्त्वात् तस्याप्यभेदापत्तिः । ब्रह्मनिरूपितमेव तत्तदभेदसाधकमितिचेन्न । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, अदृश्यं द्रष्टृ इत्यादिश्रुतिभिस्तस्य ज्ञेयत्वनिषेधात् । अभेदोऽपि जीवब्रह्मणोर्न तादात्म्यरूपः । स हि धर्मधर्मिभावे भवति, तस्याऽत्रासम्भवात् पारमार्थिकभेदवतः पारमार्थिकाभेदोऽसम्भावित इत्युक्तम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽनुपपत्तिश्च । एतेनैव चेतनत्वादिधर्मसारूप्येणौपचारिक एवाभेद उच्यते इत्यपि निरस्तम् । नच तद्विकारित्वेन प्रतिज्ञोपपत्तिः । तस्याऽविकारित्वश्रुतेः । जीवोऽपि, न जायते म्रियते वा कदाचिदित्यादिवाक्यैर्न विकार्यः । नापि जीवो ब्रह्मणोंऽशः । तस्य निरवयत्वात् । अंशो नानाव्यपदेशादिति तत्त्वसूत्रादिकं त्वौपचारिकमंशत्वमाह । मुख्ये बाधकमुक्तमेव । तस्माद् ब्रह्मोपाधिरेव जीव इति मन्तव्यम् । अभेदबोधकश्रुत्यनुरोधात् । नचोक्तन्यायेनाविद्याया उपाधित्वासम्भवान्नैवं वक्तुं शक्यमिति वाच्यम् । श्रौतानुपपत्तेर्बलिष्ठत्वात् । तथाचोपाहितस्यैवाभेदासंभवाद्भेदासिद्ध्यर्थमुपाधेरपि प्रातीतिकमेव सत्त्वमुररीकार्यम् । पारमार्थिकसत्त्वे ज्ञाननाश्यत्वासंभवात् । तथाच, यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यादिना, अविद्यावस्थायामेव द्वैतदर्शनमुक्त्वा तदभावदशायां, यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदित्यादिना च तन्निवारयतिश्रुतिरित्याविद्यकत्वं प्रपञ्चस्यापि सिद्ध्यतीति, यतो वा इमानि इत्यादिना च प्रपञ्च-

तुकत्वं प्रपञ्चस्य वदतीत्युभयसामञ्जस्यनिमित्तम् । अविद्योपहित-
मेव ब्रह्म जगत्कारणमुच्यताम् । अत एव, नान्योऽतोऽस्ति द्रष्टेत्या-
दिश्रुतिरप्युपपन्ना इत्येवं प्राप्ते ब्रूमः ।

नन्वत्रेत्यादि ॥ कथमिति ॥ किमैक्यरूपेण, किं वा भेदा-
ऽभावरूपेण, उताविर्भावरूपेणाथवा तस्मिन् सत्यभेदप्रतीतिविषय-
त्वेनाथवा तादात्म्यरूपेणाऽपि वा अविनाभावरूपेणोतोपचारेणेति ।
तत्राद्यं दूषयति ॥ परस्परमित्यादि ॥ द्वितीयं दूषयन्ति ॥ परमा-
र्थत इत्यादि ॥ तृतीयचतुर्थौ निराकरोति ॥ नच तात्त्विकेत्यादि ॥
नच इति ॥ इदमेकादशे भगवद्वाक्यम् । ता नाविदन्मय्यनुषङ्गबद्ध-
धियः स्वमात्मानमदस्तथेदम् * यथा समाधौ मुनयोऽब्धितोये नद्यः
प्रविष्टा इव नामरूपे इति । अत्र विन्दतीति विभक्तिपरिणामेन योज-
ना ॥ तयोरिति । पाथसोः ॥ इति युक्तमिति ॥ अविभागादप्रतीते-
र्वा हेतोर्युक्तम् । ननु महत्त्वनिरवयवत्वे नारम्भबाधके । प्रकृतौ पर-
माणुषु च तदङ्गीकारादित्यत आह । अविनाशीत्यादि ॥ अनुच्छि-
त्तिधर्मेत्यत्र, न विद्यते उच्छित्तिर्येषां ते अनुच्छित्तयस्तादृशा धर्मा
यस्येत्यर्थो विवक्षितो, न तूच्छित्तिधर्मो यस्याऽसावुच्छित्तिधर्मा, त-
द्भिन्नोऽनुच्छित्तिधर्मेति । अविनाशिपदेनैवार्थसिद्धावस्य वैयर्थ्याप-
त्तेः । तथाच पाथोमेलने एकतरस्य रूपरसोच्छित्त्या अभेदप्रतीति-
सिद्धिः । प्रकृते तु तदभावात्तदभावेनाविर्भावोऽप्यशक्यवचन इत्यर्थः ।
संबन्धस्याशक्यवचनत्वादपि तदनुपपत्तिमाह ॥ किञ्चेत्यादि ॥ तयोरि-
त्यादि ॥ विभुनिरवयवयोः क्रियावयवराहित्यात्कन्यः संयोगो न घ-
टयितुं शक्य इति स्वरूपेण वाच्यः । तथा सति सोऽप्यजः स्यात् ।
तादृशस्य कुत्राप्यङ्गीकाराभावादित्यर्थः । ननु जीवाणुत्वमास्थाय सं-
योगाङ्गीकारे न किञ्चिद्बाधकमित्यत आहुः ॥ किञ्चाण्वति ॥ स-
म्बन्धसत्त्वेऽपि इतराभावादित्यर्थस्याप्रयोजकत्वात् तत्रेत्याह ॥ ना-
ऽपीत्यादि ॥ किञ्चेत्यादि च ॥ पञ्चमं दूषयति ॥ अभेदोऽपीत्यादि ॥
तस्यात्रासम्भवादिति ॥ धर्मत्वं वृत्तिमत्त्वं च तदाधारत्वम् । तच्च
कुण्डलसुवर्णवदत्र वक्तव्यम् । न तु घटपटवत् प्रकृते त्वनागन्तुकतया
भेदस्य पारमार्थिकत्वेन तदसम्भवादसङ्गश्रुतिविरोधेन चासम्भवा-
दित्यर्थः । षष्ठं निराकरोति ॥ एकेत्यादि ॥ अविनाभावलक्षणाभेदाङ्गी-

कारे ज्ञानस्योभयमहिम्ना भवन् येनाश्रुतमित्येकत्वव्याकोपात्प्रतिज्ञा-नुपपत्तिरित्यर्थः । चकारो दृष्टान्तापराधसमुच्चायकः इदं दूषणम-विभागपक्षे तुल्यम् । सततं निराकरोति ॥ एतेनेत्यादि ॥ एतेनेति ॥ प्रतिज्ञोपपत्तिकथनेन ननु दृष्टान्तानुरोधात् तद्विकारमङ्गीकृत्य प्रतिज्ञो-पपादनीयेत्यत आहुः ॥ नच तदित्यादि ॥ तस्येत्यादि ॥ तस्य ब्र-ह्मणः । निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् * अमृतस्य परं सेतुं दग्धेन्धनमिवानलमित्यादिश्रुतिषु तथात्वश्रवणादित्यर्थः । तर्ह्यंशांशिभावमाश्रित्य प्रतिज्ञोपपादनीयेत्यत आह ॥ नापीत्यादि ॥ निरवयवत्वादिति ॥ निष्कलश्रुतेस्तथात्वादित्यर्थः । नन्वेवं सति व्याससूत्रविरोध इत्यत आह ॥ अंश इत्यादि ॥ तथाच निष्कलश्रुति-विरोधाद् गुणभूतेषु तेष्वन्यायकल्पना न दुष्टेत्यविरोध इत्यर्थः । एवं सर्वान् प्रकारान्निराकृत्य स्वाभिमतमाहुः ॥ तस्मादित्यादि ॥ ब्रह्मोपाधिरिति ॥ ब्रह्मविभाजकोपाधि । एवं स्वाभिमतं जीवस्वरू-पं साधयित्वार्थात्पस्यैवोपाधेरन्यसत्त्वं साधयति ॥ तथाचोपेत्यादि ॥ एवमेव प्रपञ्चस्याप्यसत्त्वं साधयन्नुपहितस्य जगज्जनकत्वमाह ॥ तथाच यत्रेत्यादि ॥ प्राप्त इति ॥ उपहितस्य कर्तृत्वे प्राप्ते ॥

तन्निराकर्तुं, ब्रूम इति प्रतिज्ञाय जीवस्यांशत्वे निरवयत्वस्य अबाधकत्वं प्रमाणपुरःसरं वदिष्यन्तस्तादात्म्येन ब्रह्माभेदं च तस्यो-पादयिष्यन्तः पूर्वं जीवस्वरूपादिकं कारिकया आहुः ॥

श्रुतितस्तत्त्वसूत्रैश्च स्मृतिभ्यश्चांश एव सः ।
स्वार्थे प्रामाण्यतस्तेषां तेभ्य एवाणुरेव च ॥

भवेदेतदेवं यद्याविद्यकं जीवत्वं स्यात् । न त्वेवम्, किन्तु पारमार्थिकम् । नचाभेदबोधकश्रुत्यनुपपत्तिः । अंशांशिभावेनैव त-दुपपत्तेः । ननु निरवयवत्वं बाधकमुक्तमिति चेत्, सत्यमुक्तम् । तत्रैवेदं विचार्यते । ब्रह्मस्वरूपं च श्रुतिगम्यं ? लौकिकप्रमाणग-म्यं वेति । तत्र न द्वितीयः । तथाहि । न तावच्चाक्षुषम्, अरूप-त्वात् । नापि स्पार्शनम् । तद्रहितत्वात् । नापि गन्धादिवद् घ्राणेन्द्रियादिप्रत्यक्षम् । अगुणत्वात् । नाप्यनुमानगम्यम् । परि-

शेषेण ज्ञानप्रयत्नाधारत्वेनात्मसाधने आवश्यकत्वाल्लाघवाच्च प्राप-सिद्धैवाऽर्थान्तरत्वेन तदसिद्धेः । यथाकथञ्चित् सिद्धावपि नो-पनिषद्विचारितरूपस्यासिद्धिः । तथाच स्वतःसिद्धप्रामाण्यैतद्विरोधेन बाधितत्वादनुमानस्य न तत्साधकत्वम् । नापि शब्दगम्यम् । तस्याप्तोक्तिरूपत्वेन तस्य च यथादृष्टार्थवादित्वेनात्मनश्चादृश्यत्वेन तदनुपपत्तेः । अत एव नोपमानगम्यमपि । किन्तु श्रुत्येकसमधि-गम्यम् । तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतेः । सर्वे वेदा य-त्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्य इति स्मृतेश्च । तदर्थश्च न लौकिकरीत्या निर्णेतुं योग्यः । अलौकिकत्वात् । तस्य च लोकविलक्षणत्वात् । किन्तु स्वयमेव वेदव्यासं कृत्वा तन्मीमांसां च प्रतिज्ञापूर्वकं कुर्वतो वेदव्यासस्य सूत्रैः । तस्यैतदर्थाभिज्ञत्वा-त् । तत्र च जीवब्रह्मसंबन्धविचारे ब्रह्मणोंऽश एव जीव इति नि-र्णीतम् । अंशो नानाव्यपदेशादिति । अस्यार्थः । जीवो ब्रह्मणः अंश एव । कुतः । नानाव्यपदेशात् । नानाविधो यो व्यपदेशः क-चिद् ब्रह्मत्वेन,क्वचिदुत्पन्नत्वेन क्वचिदज्ञत्वेन, क्वचिच्चिद्रूपत्वेन, क्वचि-दीशितव्यत्वेन अणुत्वेन च, व्यापकत्वेन च निरूपणादेकस्यैव वि-रुद्धधर्माश्रयत्वं ब्रह्मातिरिक्तस्य न संभवतीति ब्रह्मांश एव जीव इत्यर्थः । अथवा नानाव्यपदेशाद्भेदेन व्यपदेशात् तथेत्यर्थः । श्रुति-श्च, यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवाऽस्मादात्मनः सर्वे-प्राणा इत्युपक्रम्य सर्व एवात्मानो व्युच्चरन्तीति, कपूयचरणा र-मणीयचरणा इति च । यत्तु जीवस्य ब्रह्मोपाधिकत्वमङ्गीकृत्य वि-स्फुलिङ्गस्यौष्ण्यमिव चेतनत्वं साधारणो धर्मो जीवेश्वरयोरित्यौ-पचारिकमंशत्वं व्याख्याय नानाव्यपदेशदर्शनं श्रुतौ, यथाग्नेः क्षु-द्रा विस्फुलिङ्गाः, य आत्मनि तिष्ठन्नात्मानमन्तरो यमयतीत्या-देः । तदुपेक्ष्यं विद्वद्भिः । पूर्वापरविरोधात् । तथाहि । न हि तत्प-

तीयजीवस्याभासत्वेन प्रतिबिम्बत्वेन वाऽलीकस्य नियमनमतस्त-स्मिन् स्थितिर्वा ज्ञानैकघनस्य परमात्मनः संभवति । न वा वि-स्फुलिङ्गौष्ण्यदृष्टान्तेन चेतनत्वं साधारणं धर्ममादायौपचारिक-मंशत्वमपि व्याख्यातुं शक्यम् । तत एवांशत्वावगमप्रकारस्तु न श्रुत्यैव यथाग्नेः क्षुद्रा इत्यादिनोक्तः ॥

श्रुतित इत्यादि ॥ व्याकुर्वन्ति ॥ भवेदेतदेवं, यद्याविद्यकमिति ॥ एतत् त्वदुक्तं भवेत् उपपद्येत । एवं त्वदुक्तप्रकारेणाविद्योपाधिक-मित्यर्थः ॥ परिशेषेणेत्यादि ॥ परिवर्जनं । वर्जितस्य शेषः । प्रसक्ते निषधे तत्संसर्गरहितः परिशेषस्तेन । अयमर्थः । निरात्मवादिनां बाह्यानां मते चेतनाया मदशक्तिवत् पुञ्जधर्मत्वम् । यथा केवलैः ख-दिरचूर्णताम्बूलपर्णपूगैर्न मदः, समुदितैश्च मदस्तथा केवलपर-माणूनामचेतनत्वं, त्रिविधपरमाणुपुञ्जस्य चेतनत्वमिति । तत्राभ्ये वदन्ति । किं बाह्यः पुञ्जश्चेतनधर्मा उत आन्तरः । तत्र बाह्यः पुञ्जः शरीररूप आत्मा ज्ञानप्रयत्नाधारत्वात् । यन्नैवं तन्नैवम् । घटादि-वदित्यनुमानेन शरीरत्वावच्छिन्नस्य बाह्यपुञ्जस्यात्मत्वसाधने । अनात्मा, तदनाधारत्वात् । मृतशरीरवदिति प्रत्यनुमानेन हेतोः स-त्प्रतिपक्षत्वाच्छरीरादिकं जीवत्वेन विशेषणीयम् । जीवत्वं किमि-त्यपेक्षायमन्वयव्यतिरेकाभ्यां प्राणधारणप्रयत्नवत्त्वमेव जीवत्वेन अवधारणीयम् । तत्त द्वारकत्वं कस्येतिजिज्ञासायां शरीररूपो बाह्यः पुञ्जो न तद्वारकः । बाह्यत्वात् । मृतशरीरवदित्यनुमानेन बाह्यस्य तथात्वे निरस्ते, आन्तरस्य पुञ्जस्य तथात्वम् आन्तरत्वाद्वक्तव्यम् । तत्त आन्तरः पुञ्जो न तद्वारकः । आन्तरत्वात् । मृतपश्वान्तरापिण्ड-वदित्यनेन हेतोः साधारणत्वेऽवगते, देहात्मवादो दूषितो भवति । ततश्चक्षुरात्मा, प्राणधारकत्वात् । ज्ञानप्रयत्नाधारत्वाद्वा । यन्नैवं त-न्नैवम् । श्रोत्रादिवदित्येवं प्रत्येकमिन्द्रियेष्वात्मत्वसाधनेऽपि यत्र स-कलगोलकहीनत्वं तादृशपिण्डेऽपि क्षुत्तृट्कार्यदर्शनात्तद्वारकत्वम् । अन्तःकरणे पर्यवस्यति, न तु समुदाये । गोलकनाशेन तन्नाशात् नापि त्वगिन्द्रियम् । अंशतस्तस्यापि नाशादिति ॥ तत्र पुनस्तेना-नुमानेन तथात्वसाधनेऽपि तत् किमणु, विभु वेति शङ्कायां ज्ञाना-दिकं नाणुगुणः, प्रत्यक्षत्वात् । घटरूपादिवत् । यन्नैवं तन्नैवम् । पर-

माणुरूपादिवदित्यनुमानेन ज्ञानादेस्तथात्वे निश्चिते, ततो, नाडी- मनःसंयोगः कर्मजन्यः । यावत्प्रतियोगिसत्त्वेऽपि कादाचित्कत्वात् । इत्याणुपुरुषसंयोगवत् । यन्नैवं तन्नैवम् । इत्याण्वाकाशसयोगवत् । मनो मूर्त्तं, क्रियावत्त्वात् । वायुवदित्यादिना करणत्वेन सिद्धस्य मनसो ज्ञानाद्यनाधारत्वे सिद्धे, तेनानात्मत्वसिद्धिः । ततः प्राणोऽव- शिष्यते । तस्यात्माभिन्नत्वसाधनं दुर्घटम् । प्राणसत्त्वे जीवत्वस्य तद- ऽसत्त्वे तदभावस्य च दर्शनात् । ज्ञानप्रयत्नाधारत्वस्य तत्रैव पर्यव- सानात् । न च सुषुप्तौ ज्ञानाभावेन तस्मिन् ज्ञानाद्यनाधारत्वे नि- श्चिते प्राण आत्मभिन्नः । ज्ञानाद्यनाधारत्वात् । देहादिवदित्यनुमानेन आत्मभेदसिद्धिरिति शङ्क्यम् । श्वासोच्छ्वासदर्शनेन तदानीमपि त- स्य प्रयत्नवत्तानिश्चयात् । ज्ञानाभावस्य मनःसंयोगाभावजन्यत्वेन ज्ञानाधारत्वयोग्यताविघटनाभावात् । अतो ज्ञानाद्याधारत्वेनात्मसा- धने तदभावस्यादर्शनात् प्राणस्यैवात्मत्वेन सिद्धिर्न तु ततोऽप्यति- रिक्तस्यात्मनः । देहप्राणवियोगस्यैव मृत्युत्वेन जीवद्देहे तस्यावश्य- कत्वात् । अतिरिक्तात्मनोऽनभ्युपगमेन पदार्थलाघवाच्च । तथा स- त्यनुमानस्यार्थान्तरसाधकत्वेन हेत्वाभासत्वम् । यदि च योगि- नां श्वासनिरोधेऽपि जीवनज्ञानादिदर्शनात् तदतिरिक्त एवात्मेति विभाव्यते, तदापि निरुद्धवृत्तिकप्राणतद्देहे सत्त्वान्न तदतिरिक्तात्म- सिद्धिः । यदि च निरोधजनकस्य प्राणातिरिक्तत्वं विभाव्यते तदा- ऽपि चेतनाधर्मकस्यैव तस्य सिद्धिर्न तूपनिषद्विचारितचिद्रूपस्य सिद्धिः । एतेनाहंवित्तेरप्यप्रयोजकत्वमुक्तप्रायम् । तदेतदुक्तं— नोपनिषद्विचारितरूपस्य सिद्धिरिति ॥ सिद्धमाहुः ॥ तथाचेति ॥ अत एवेति ॥ शब्दप्रत्यक्षोपजीवकत्वादेव । एवं जीवस्वरूपस्य लौकि- कप्रमाणगम्यत्वेन श्रुत्येकसमधिगम्यत्वं साधयित्वा ब्रह्मणस्त- थात्वमाहुः ॥ तं त्वेत्यादि ॥ इदं हि बृहदारण्यके शाकलब्राह्मणेऽस्ति। अत्र पूर्वं, स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यत इत्युक्तम् । तत्र यदि केवलेन्द्रियग्राह्यत्वं विवक्ष्येत तदा औपनिषदपदमनतिप्रयो- जनं स्यादत उपनिषदितरयावत्प्रमाणावेद्यत्वमास्थेयम् । अतः श्रुत्ये- कसमधिगम्यमित्यर्थः । तर्हि पूर्वकाण्डवेद्यत्वमपि न स्यादत आहुः ॥ सर्व इत्यादि ॥ किं तेनेत्यत आहुः ॥ तदर्थ इत्यादि ॥ वेदव्यासमिति ॥ वेदविभागम् । तावता जीवस्वरूपस्य कथं श्रौतत्वमित्यत आहुः ॥

तत्र चेत्यादि ॥ कश्चित् ब्रह्मत्वेनेत्यादि ॥ अयमात्मा ब्रह्म सर्वानुभूः । सर्वे एत आत्मानो व्युच्चरन्ति । ज्ञाज्ञौ द्वावीशानीशौ । विज्ञानघन एवैतेभ्यो भूतेभ्यः । क्षरात्मानावीशते देव एकः । एषोऽणुरात्मा चेतसा वेदितव्यः । स वा एष महानज आत्मा योऽयं विज्ञानमय इत्यादिष्वित्यर्थः । भेदेन व्यपदेशः कुत्रेत्याकाङ्क्षायामाहुः ॥ श्रुतिश्चेत्या-स्यादि ॥ तथा चात्मान इति बहुत्वस्य व्युच्चरणभेदस्य च बोधनेन जीवानां परस्परं ब्रह्मणः सकाशाच्च भेदेन व्यपदेश इत्यर्थः । चरणभेदश्रुतिश्छान्दोग्यस्था ज्ञेया । नन्वभेदश्रुतेर्बलिष्ठत्वान्निरवयवत्वस्यैव बाधकत्वादुक्तसूत्रेऽप्यौपचारिकमेवाद्रियत इति न भवदुक्तरीत्या निर्णय इत्याशङ्कायां तद्व्याख्यानदोषं वक्तुं तदाहुः ॥ यत्त्वित्यादि ॥ ब्रह्मोपाधिकत्वमिति ॥ स्वार्थे कः ॥ इत्यादेरिति पञ्चमी । वस्तुतस्तु प्रथमान्त एव पाठः प्रतिभाति ॥ स्थितिरित्यात्मनः स्थितिः ॥ तत एवेति ॥ अलीकत्वादेव । नन्वेवं सति घटाकाशवदविद्यावच्छिन्नं चैतन्यमेव जीवोऽस्तु तथा सति अंशत्वमौपचारिकमेव भविष्यतीत्यत आहुः ॥ अंशत्वेत्यादि ॥

ननु, घटसंवृतमाकाशं लीयमाने घटे यथा * घटो लीयेत नाकाशस्तद्वज्जीवो नभोपम इति बिन्दूपनिषदि श्रावणादुपाध्यवच्छिन्नं ब्रह्मैव जीवः । व्युच्चरणश्रुतिस्तु बृहदारण्यके सुप्तं पुरुषमुपक्रम्य पठ्यते इति श्वासानां सुषुप्त्यनन्तरं व्युच्चरणं वदिष्यति । यदि च एष आकाशस्तस्मिञ्छेते इति व्यवहितमाकाशशब्दवाच्यं ब्रह्मैव पूर्वमुक्तमिति तत एवोर्णनाभिदृष्टान्तेन व्युच्चरणमङ्गीक्रियते । तदापि काण्वपाठे आत्मनामनुक्तत्वात्तदपि मनःपरतया कथञ्चिन्नेयम् । ब्रह्मणो निरवयवत्वस्यांशत्वबाधकस्योक्तत्वादित्याशङ्कायामाहुः ॥

इदमत्र ज्ञेयम् । ब्रह्मणो निरंशत्वं सांशत्वं वा न लोकसिद्धं, येन तदनुरोधेन किञ्चिद्वक्तुं शक्यम् । किन्तु वेदैकसमधिगम्यम् । एवं सति तथैव स निरूपयति, तथैव तदिति मन्तव्यम् । अत एव, नैषा तर्केण मतिरापनेया, अलौकिकास्तु ये भावा न तांस्तर्केण योजयेदित्यादिका श्रुतिर्लौकिकयुक्त्या तद्बोधनं निषेधति । अन्यथा सर्वत्र लौकिकयुक्त्यनुसारिण्येवार्थे श्रुतेस्तात्पर्यवत्त्वेन, नैषा तर्के-

णेत्यादिश्रुतिरनर्था विरुद्धार्था च स्यात् । लोकेऽपि यत्र वस्तु-स्वभाव एव कार्यहेतुर्न तत्र युक्तिसंभावना । यथा अयस्कान्तसंनिधौ लोहपरिभ्रमणम् । नच तत्र मणिनिष्ठा देवताऽऽकर्षिकेति वाच्यम् । तस्या अपि लोहस्यैवाकर्षणे हेत्वपेक्षायां देवतास्वभावस्यैव तथात्वेन वक्तव्यत्वादावश्यकत्वाल्लाघवाच्च मणिस्वभावस्यैव तत्त्वेन वक्तुमुचितत्वात् । तथात्रापि श्रुतिबलाद् वस्त्वेव तादृशमिति मन्तव्यं, न युक्तिरपेक्षणीया । तथाच सैव, निष्कलं निष्क्रियमित्यादिना सांशत्वं निराकृत्य, यथाऽग्नेरित्यादिना जीवस्य ब्रह्मांशत्वमप्याह । व्यासोऽप्यत एवेममेवार्थं दृढीकर्तुं हेत्वन्तराण्याह । मन्त्रवर्णादिति, अपि च स्मर्यत इति च । मन्त्रवर्णश्च, पादोऽस्य विश्वा भूतानीति भूतानां जीवानां पादत्वेनांशत्वमेवाह । स्मृतिश्च, ममैवांशो जीवलोके जीवभूतः सनातन इति जीवस्य ब्रह्मांशत्वमेवाह । इत एवाभेदश्रुतिरुपपद्यते । न हि विस्फुलिङ्गो नाऽग्निः । एवं जीवो ब्रह्मांशत्वाद् ब्रह्मैव । तर्हि सार्वज्ञ्यानुपपत्तिः ? । न हि विस्फुलिङ्गो न दाहकः प्रकाशको वा । अल्पप्रकाशनवदल्पज्ञत्वोपपत्तावपि, भ्रमस्तु नोपपद्यते जातु । नच देहसंबन्धकृतमनीशत्वादीति वाच्यम् । तस्यापि जीवभावोत्तरकालीनत्वात् । तस्मादीश्वराद्भिन्न एवानीशत्वादिविशिष्टो नित्यबद्ध एवेश्वरप्रसादजज्ञानतो मुक्तो भवतीति नांशो भवितुमर्हतीति । श्रुतिश्च प्रलयसमये भगवदुदरान्तःस्थानां जीवानां पुनः सर्गसमये ततो निर्गमनप्रकारमेवमाह विस्फुलिङ्गदृष्टान्तेन । नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतिरपि जीवादिसर्वपदार्थविषयकदर्शनादिमत्त्वं सर्वदाऽन्यस्मिन्निषेधति, न तु परिच्छिन्नदर्शनादिकमपि । यथा, पार्थ एव धनुर्द्धर इत्यत्र, न हि पार्थादन्यो न धनुर्द्धरः, किन्तु यथा स तथा नान्य इति, तथेहापीति चेद् बाढमेवमङ्गीकुर्मो यदि वेदार्थतामरस-

तरेभेगवतो बादरायणस्य सूत्रैः सप्रमाणनिदर्शनैः, अंशो नाना-व्यपदेशाद् इत्यादिभिस्तदुक्तं न विरुद्ध्येत । नचैवम् । किञ्च, विस्फुलिङ्गदृष्टान्ते यद्यात्मनामेवोत्पत्तिं वदेत् तदा त्वदुक्ताकार उपपद्येतापि । न चैवम् । किन्तु सर्वेषां प्राणानां लोकानां देवानां भूतानामपि तथैव सृष्टिमुक्त्वा, सर्व एवात्मनो व्युच्चरन्तीत्यवदत् । नच त्वं प्राणादीनां नित्यत्वं तथा सृष्टिं वा मनुषे येन तत्प्रक्रम-पठितानामात्मनां तथात्वमवादीः । नचात्मनां निर्गमनप्रकारमवाह, प्राणादीनामेवोत्पत्तिमाहेत्यपि वक्तुं शक्यम् । वाक्यभेदप्रसङ्गाद्, विनिगमकाभावाच्च । यद्यपि यथाग्नेरिति श्रुत्यैव जीवस्यांशत्वं तदभावो वा न निश्चेतुं शक्यः । चिन्तामणिकल्पवृक्षमन्त्रा-दिभ्यः इवापि ब्रह्मणः सकाशात् प्राणाद्युत्पत्तेः सम्भवात् । तथापि सूत्रैस्तदुपदर्शितश्रुतिस्मृतिभ्यश्चांशत्वमेवावगम्यते । नचैवं सार्वज्ञ्यानुपपत्त्यादिदूषणग्रासः । सर्वज्ञत्वादिधर्माणां भगवदिच्छ-यैव तिरोभूतत्वात् । यतः सूत्रकारोऽपीमामेवाशङ्कामपाकर्तुमेवमेव जगाद, पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति । अस्य जीवस्यैश्वर्यादि तिरोहितं, तत्र हेतुः पराभिध्यानात्, परस्य भगवतोऽभिध्या ध्यानं स्वस्य जीवस्य च सर्वतो भोगेच्छा तस्मा-द्धेतोः । ऐश्वर्यादिसद्भावे वैचित्र्याभावाद् भोगो न भविष्यतीति जीवे तिरोभावं कृतवान् स्वधर्माणाम् । तत एव तिरोभावाद् बं-धो भगवद्धर्मविपरीतधर्मवत्त्वं चेत्यर्थः । ऐश्वर्यतिरोभावाद्दीनत्वं पराधीनत्वं च । वीर्यतिरोभावात् सर्वदुःखसहनम् । यशस्तिरो-भावात् सर्वहीनत्वम् । श्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वम् । ज्ञानतिरोभावाद्देहाद्यहम्बुद्धिः, सर्वविपरीतज्ञानमपस्मारसहितस्येव । वैराग्यतिरोभावाद् विषयासक्तिः । आनन्दांशस्तु पूर्वमेव तिरोहि-तो येन जीवभावः । अत एव 'नेतरोऽनुपपत्तेः । भेदव्यपदेशाच्च'

इत्यादिना जीवस्यानन्दमयत्वं न्यषेधत् सूत्रकारः ॥

इदमत्रेत्यादि ॥ योजयेदिति ॥ प्रसाधयेत् । एतद्बाधनं श्रुत्यु- कार्थबाधनम् । तथाच वैदिकयुक्त्या यदेव सिद्धं तदेव ग्राह्यमिति भावः ॥ अन्यथेति ॥ यदि लौकिकयुक्तिरप्यभिप्रेता श्रुतेः स्यात् । लौकिकयुक्तेः शिथिलत्वाय तस्या लोकेऽपि कुण्ठतां वक्तुमाहुः ॥ लोकेऽपीत्यादि ॥ भूतानां जीवानामिति ॥ अहिंसन् सर्वभूतानि, न हिंस्यात् सर्वा भूतानीत्यादिप्रयोगात् ॥ योगात् पादत्वेनेति ॥ पादो भागोंऽश इत्येषां पर्यायत्वदर्शनात् । तथाचैतद्विरोधादवच्छेद- वादो नाङ्गीकर्त्तुं शक्यत इति न सा श्रुतिरन्यथा नेतुं शक्या । तेन नभोपम इति लयाभाव एव दृष्टान्तो, न त्वनंशत्वेऽपि पूर्वमन्त्रे जल- दृष्टान्तोऽस्त्यर्थ न चैतावता प्रतिबिम्बवादे भ्रमितव्यमित्याशयेन आहु. ॥ अत एवेत्यादि ॥ अंशत्वेन तादात्म्यादेव ॥ अभेदश्रुतिः– उ- पद्रष्टानुमन्तैष आत्मा सिंहश्चिद्रूप इत्याद्या, उपपद्यते– भेदसहिष्णु- रभेदस्तादात्म्यमिति तादात्म्यलक्षणादुपपद्यत इत्यर्थः । एवं पूर्व- प्रश्नद्वयोत्तरत्वेन प्रकारः सबन्धश्चोक्तः । अत्र तादात्म्यमनङ्गीकु- र्वतां तात्त्विकभेदवादिनां रामानुजमाध्वनैयायिकादीनां नानामतानि ॥

तत्र माध्वा हि– ज्ञोऽत एवेति सूत्रे, नित्यो नित्यानां, सर्व एवा- त्मानो व्युच्चरन्तीति श्रुत्योर्विरोधे, ज्ञः=जीवः, अत एव=परमेश्वरादे- वोत्पद्यते। शब्दादेव ते वा एते चिदात्मानो अविनष्टाः परं ज्योतिर्निवि- शन्त्यविनष्टा एवोत्पद्यन्ते, न विनश्यन्ति कदाचनेति काषायणश्रुति- मुक्त्वा, उत्पद्यन्ते चिदात्मानो नित्यानित्याः परात्मनः * उपाध्यपेक्ष- या तेषामुत्पत्तिरिति गीयते इति व्योमसंहितास्मृतिमाहुः । ततस्त- द्गुणसारत्वादिति सूत्रे जीवस्य ब्रह्माभेदमाशङ्क्य ब्रह्मगुणसारत्वा- द् ब्रह्मव्यपदेशं वदन्तो यथा, सर्वं खल्विदं ब्रह्मेत्यत्र परमात्मनो जगद्व्यपदेशो गौण्या तथा जीवे ब्रह्मव्यपदेशोऽपीत्युक्त्वा अभेदवा- दिना गौण्या अमुख्यत्वे दर्शिते सार्वज्ञादिगुणवता ब्रह्मणा सहाभे- दोऽज्ञानादिमतो न युक्त इत्यनुपपत्त्या गौणीमाद्रियन्ते । यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमेति कठवल्लीश्रुतौ जीवस्य ब्रह्मणि प्रवेशे सत्यऽभेदप्रतीति- विपर्ययस्य प्रबोधनात् । न श्रुदकयोस्तदानीं वा अभेदः ।.गुरुत्वा-

मानी भिन्नः । तथा ब्रह्म न श्रुतौ कराद्भिन्नं तदभिमानित्वेन निरूप्यते । किन्तु करादेरपि ब्रह्मत्वाद् भेदाभावाद्रूपमेव निरूप्यते न तु रूपवदित्यर्थः । ननु कुत एतदवगम्यते करादीनामपि ब्रह्मत्वमेव, न तद्भिन्नत्वमित्यत आह तद्विनिगमकम् । तत्प्रधानत्वादिति । सर्वेषां वेदान्तानां ब्रह्मैव प्राधान्येन प्रतिपाद्यं यतः । अयमर्थः । करादीनामब्रह्मत्वे तन्निरूपकाणां वेदान्तानामब्रह्मपरतया ब्रह्मपरत्वनियमव्याहतिरतः करादिनिरूपकाः साक्षाद्ब्रह्मप्रतिपादका एवेति । सर्वत्र प्रसिद्धोपदेशात्, आमनन्ति प्रसिद्धोपदेशात्, आमनन्ति चैनमस्मिन्नित्याद्यधिकरणरूपोपपत्तिर्हिशब्देनोच्यते । यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वारेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति, सत्यं विज्ञानमानन्दं ब्रह्मेति, आनन्दमात्रकरपादमुखोदरादिरिति, आनन्दमयोऽभ्यासादिति श्रुतिस्मृतिन्यायैकवाक्यतया सच्चिदानन्दरूपत्वं करादीनामवधारणीयम् । अत एवाग्रे सूत्रकारोऽप्याह । आह च तन्मात्रमिति । एता एव श्रुतयोऽत्रानुसन्धेयाः । त्वदभिमतव्याख्याने त्वरूपमित्येतावतैव चारितार्थ्यं स्यात् । रूपवत्त्वस्योभयत्राप्यसंमतत्वेनाविवादास्पदत्वात्तन्निषेधानुपपत्तिः । रूपरूपत्वस्य सिद्धान्ताभिमतत्वात् । एवं सति तथा कथनादस्मदुक्त एवार्थः सूत्रकाराभिमत इति ज्ञायते ॥ अपि च, दर्शनाच्चेत्यनेन श्रुतिस्मृतिप्रत्यक्षैः सर्वविरुद्धधर्माश्रयत्वेन विरोधं परिहृत्य युक्त्यापि प्रतिषेधति, प्रकृतेति । अस्थूलादिवाक्यैरेतावत्त्वं स्थूलत्वाणुत्वह्रस्वत्वादिकं श्रुतिर्ब्रह्मणि यत् प्रतिषेधति तत् प्रकृते लोके, प्रकृतं वा यल्लौकिकमेतावत्त्वं तदेव तत्प्रतिषेधति, न तु स्वोक्तान् धर्मान् सर्वेशितृत्वादीनित्यर्थः । एवमेव, नेतीत्यत्रेतिशब्दः प्रकारवाची । तथाच पूर्वं मूर्तामूर्तं ब्रह्मणो विभूतिरूपं य एवं वेदेत्यन्तेन नि-

रूप्य यस्यैतद्रूपद्वयं पूर्वमेव षष्ठ्यन्तेन पदेन निरूपितभेदस्य त- स्मिन्निरूप्यमाणेऽपि सर्वतः पाणिपादान्तादिष्वेवं लौकिकत्वेन वेदनं मा भूदिति भिन्नप्रक्रमेणैतत्प्रकारकं वेदनं ब्रह्मणो निषेधति, अथात इत्यादिना । अयमर्थः । ब्रह्मण्यपि मूर्तामूर्तरूपे सर्वतः पा- णीत्यादिश्रुत्युक्ते वेदितव्ये । परं त्वनेन प्रकारेण न वेदितव्ये ब्रह्मण एते रूपे इति, । किन्तु ब्रह्मैवेति वेदितव्ये इत्यर्थः । अत्र विनिगमकमाह सूत्रकारः । ततो ब्रवीति च भूय इति । यस्मिन्नेव वाक्ये प्रकरणे वा निषेधति तस्मिन्नेव निषेधानन्तरं पुनस्तं ध- र्ममाह श्रुतिः । यथा, पराञ्चि खानीत्युक्त्वा प्रत्यगात्मानमैक्षदि- ति । यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्युक्त्वा आनन्दं ब्रह्मणो विद्वानिति । अस्थूलाद्युक्त्वा एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत इत्यादि । त्वद्व्याख्याने तु प्र- कृतपदं व्यर्थं स्यात् । एतावत्पदेनैव सान्निध्यतो रूपद्वयप्रतीतेः संभवात् । नचैतावत्पदस्य सामान्यवाचकत्वाद् विशेषगमक- त्वं तस्येति वाच्यम् । तुल्यत्वात् । अथवाऽत्र हि, नेतिनेतीति वाक्यं विचार्यते, निषेधः कस्येति । तत्र सूत्रे प्रकृतशब्देन द्वे- वा व ब्रह्मण इत्यादिनोक्तं मूर्तामूर्तलक्षणं रूपद्वयं परामृश्यत इति तवाभिमतम् । तथाच, प्रकृतत्वं प्रतिषेधतीत्येतावतैव चारि- तार्थ्ये सत्येतावत्पदं व्यर्थम् । तेनास्मदुक्त एवार्थो व्यासाभिमत इति मन्तव्यम् । तथाच सविशेषनिर्विशेषनिरूपकयोः श्रुत्योर्विरो- धाभावात् प्रापञ्चिकधर्मरहितं सहजानन्तधर्मयुक्तं ब्रह्मेति सिद्धम् ॥

एवं समन्वयाविरोधाध्यायविरोधे दर्शिते तृतीयाध्यायसूत्राभ्यां प्रत्यवस्थानं स्मारयति ।

ननु सूत्रेष्वित्यादि । तद्दूषयितुं सूत्रार्थं व्युत्पादयन्ति ॥ मैवमि- त्यादि ॥ औपाधिकमिति ॥ तात्त्विकोपाधियुक्तम् ॥ श्रुतेरिति ॥ वि

षय इति शेषः ॥ औपाधिकत्वे । निरस्येति ॥ सर्वत्र हीत्येतत्सूचितेन सार्वत्रिकत्वादिति हेतुना निरस्य प्रत्येकमतद्वचनादिति ॥ प्रतिवाक्यं वायमेव स योयम् । स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यायभेदवचनात् । त्वदभिमतस्येति । निर्विशेषस्य ॥ निरूपितमिति ॥ दशमस्कन्धेत्यादिना ॥ प्रागेवोक्तं विश्ववैलक्षण्यं सर्वेशितृत्वेनापि भवतीत्यतः प्रकारान्तरेण व्याकुर्वन्ति । अथवेत्यादि ॥ उच्यत इति रूपपदेनोच्यते । ननु करादिनिरूपकाणां ब्रह्मपरिचायनार्थतया तन्निरूपकत्वेपि प्राधान्येन ब्रह्मनिरूपकतायाः प्रतिरोधाभावान्न करादीनां ब्रह्मभेदसिद्धिरित्यत आहुः ॥ स यथेत्यादि ॥ अनन्तरो बाह्याभ्यन्तरभेदरहितः ॥ ननु तन्मात्रसूत्रे कथं करण एव प्रयोगासुवादीनां चातथात्वाद्विरुद्धं व्याख्यानमित्यरुच्या पक्षान्तरमाहुः ॥ श्रुतिस्मृतिभ्यामिति ॥ कश्चिद्धीरः ज्ञानप्रसादेन तमक्रतुं पश्यतीत्यादिश्रुतेः ॥ अनेकबाहूदर, भक्त्या त्वनन्ययेत्यादिस्मृतेश्चेत्यर्थः ॥ ननु सूत्रे संराधने दर्शनं निर्णीतमिन्याराधनोत्तरकालीनं दर्शनं तु न संराधनहेतुकं शत्रुमित्रोदासीनसाधारणत्वात् ॥ अतः, सर्वदृश्यत्वं ब्रह्मबाधकं भगवदवतारेष्वतथात्वं गमयतीति न पूर्वोक्तं साधीय इत्यत आहुः ॥ एवं सतीति । मनीषितानुभावोयमिति स्मृत्या भगवदिच्छानुभावेन दर्शने सिद्धे सति तथाचावतारदशायामपीच्छयैव दर्शनमिति न दोषलेश इत्यर्थः ॥ नन्वेवं सति भक्ताभक्तयोर्दर्शनतौल्यात्संराधनन्यायविरोधस्तु दुष्परिहर इत्यत आहुः ॥ भक्तानामित्यादि, स्यादित्यन्तम् ॥ तथाच तदपि परम्परया संराधनहेतुकमेवेति न न्यायविरोध इत्यर्थः ॥ ननु तथापि भिद्यते हृदयग्रन्थिरिति श्रुत्युक्तं दर्शनं फलस्य शत्रुप्रभृतिष्वदर्शनादवतारेषु ब्रह्मत्वं दुर्घटमित्यादि, स्यादित्यन्तम् । एवमेवेति इच्छायाः प्रतिबन्धकत्वादेव ॥ इदमेवोक्तं ब्रह्माण्डपुराणे ॥ तदग्रे प्रभासीयलीलाप्रसङ्गे प्रदर्शनीयम् ॥ नन्ववतारेषु ब्रह्मत्वे लौकिकतेजस्तु, दृश्येतेत्यत आहुः ॥ अलौकिकेत्यादि ॥ एवं दृश्यत्वं साधयित्वा तत्साधिकां युक्तिं प्रकाश्यत्वसाधनेऽतिदिशन्ति । एवमेवेत्यादि ॥ प्रकारान्तरस्याथाहुर्वैचित्र्यार्थं यदेत्यादि ॥ न तत्र सूर्यो भातीति श्रुतिविरोधे सत्यपि तत्तेजसो भगवदीयत्वेन प्रतिपादनान्नातिविरोधीत्यर्थः ॥ ननु व्यवहार्यत्वं तु बाधकमपरिहार्यमित्यत आहुः ॥ सर्वेत्यादि ॥ व्यवहारो

ज्ञानकर्मेन्द्रियव्यापारस्तद्विषयत्वं तत्तथेत्यर्थः ॥ तत्र हेतुः ॥ नन्वि-त्यादि ॥ अत्र सूत्रकारसंमतिमाहुः ॥ अत एवेति ॥ व्यवहार्यत्वस्ये-श्वरकृतत्वादेव ॥ पूर्वेणेति ॥ अरूपवत्सूत्रेण ॥ रूपरूपत्वस्यैव तत्र विवक्षितत्वात्तथेत्यर्थः ॥ इदमिति ॥ सूत्रम् ॥ इत्यादिश्रुत्या चेति ॥ लभ्यत्वस्य प्राप्त्यात्मकव्यवहारविषयत्वात्मकत्वादित्यतस्तथेत्य-र्थः ॥ एकदेशिभिः सर्वविदिति पाठस्वीकाराच्छ्रुत्यन्तरं परास्य श-क्तिरित्युक्तम् । आधारत्वप्रतीतिविषयत्वादीनां निर्धर्मकत्वाद्विरो-धित्वात्तदभिमानेन प्रत्यवतिष्ठन्ते प्रत्याहुः ॥ अत एवेत्यादि ॥ तथा-चैव दुर्युक्तिभिः प्रत्यवस्थानं श्रुतिरेव निषेधतीत्यकिञ्चित्करोयं त-थाभिमान इत्यर्थः ॥ उक्तरीतिककुयुक्त्या युक्त्यवस्थानं युक्त्या परि-हरन्ति ॥ किञ्चेत्यादि ॥ ननु दर्शनस्य न वस्तुतत्त्वनिर्णायकत्वं गौ-डवार्तिके । उपलम्भात्समाचारात् माया हस्ती यथोच्यते * उपल-म्भात्समाचारादस्ति वस्तु तथोच्यत इति दर्शनादेव प्रामाणिकत्व-कथनादिति शङ्कायामाहुः ॥ माया हीत्यादि ॥ तद्धर्मत्वेनैव निरूप-णादिति ॥ तथाच, लौकिकप्रमाणजन्यदर्शनस्याप्रामाण्यं, नतु भगव-त्कृपया साधनकस्यापीति गौडवार्तिकमप्रमाणं चालौकिकं तत्परं वेति दर्शनस्य प्रामाण्यमदण्डवारितमित्यर्थः ॥ अत्र सूत्रकारस्यापि संमति-माहुः ॥ अत एवेत्यादि ॥ नन्विन्द्रो मायाभिः पुरुरूप इति श्रुतौ दर्श-नस्य मायिकत्वकथनाद् मायया दर्शयतीति शङ्कायामाहुः ॥ अपि-चेत्यादि ॥ तद्भिन्नेति ॥ भगवत्स्वरूपाद्भिन्ना ॥ ब्रह्मधर्मत्वेनेति ॥ वि-रुद्धधर्माश्रयत्वस्य तथात्वेन ॥ तादृशामिति स्वान्तःस्थापितपृथिव्या-दित्वेन तदाधारमित्यर्थः ॥ उक्तयुक्तेरिति ॥ विरुद्धधर्माश्रयत्वात् ॥ नन्वस्तु विरुद्धधर्माश्रयत्वं, तथापि तथाप्रदर्शनाङ्गीकारे को दोष इ-त्यत आहुः ॥ असत्यदर्शनमित्यादि ॥ इदमग्रे लीलानित्यतावादे व्यु-त्पाद्यम् ॥ तथाच तथाङ्गीकारे इत्थं विदिततत्त्वाया गोपिकायाः स ईश्वरः ॥ वैष्णवीं व्यतनोन्मायामित्यादिवाक्यविरोध इत्यर्थः ॥ अस्तु करणत्वमेवेत्यत आहुः ॥ तथाचेत्यादि ॥ स्वासक्तौ वा द्रष्टुरयोग्ये वा लोकेपि मायोररीकरणं दृश्यते प्रकृते चोभयाभावान्न तस्याः करणत्वं शक्यवचनमित्यर्थः । अशक्तिं परिहरन्ति ॥ स्वाभाविकी-ति ॥ ननु, तर्हि कौतुकार्थमेव तदादरोस्त्वित्यत आहुः ॥ किञ्चेत्यादि॥ कौतुकाया अपि हि सद्रूपा असत्प्रदृश्यते ॥ प्रकृते तु तद्विपरीतमतो

मूर्खप्रलपितमेतदित्यर्थः ॥ ननु, गुणत्वादस्तु तदुररीकरणमित्यत आहुः॥ एतेनैवेति॥ सहजानन्तशक्तिमत्त्वस्य श्रुतिसिद्धत्वेनैव ॥ अवतीर्णस्य सगुणत्वं तथेत्यर्थः ॥ एवं शक्तस्य तादृशतद्ग्रहणस्यानुपपन्नत्वेनैव पूर्वप्रकृतस्यापि सिद्धिमाहुः ॥ एतेनैव चेति ॥ चकारः असद्रूपेत्यादिनोक्तस्य द्वितीयपक्षस्य विकल्पे यद् दूषणं तत्समुच्चायकः ॥ ननु, माया उपाधित्वं मयाङ्गीक्रियत एवेति चेत्तत्राहुः ॥ अङ्गीकारे इत्यादि ॥ स्वत उपाधित्वे ज्ञाननाश्यत्वभङ्गापत्त्या ईश्वरेच्छैव तथा वाच्या ॥ तथा सति उक्तरीत्या हेत्वभावः ॥ अशक्तिद्रष्टृयोग्यत्वकौतुकान्यतमप्रयोजकताया वक्तुमशक्यत्वात्तथेत्यर्थः ॥ असम्भव इति ॥ उपाध्यसम्भवः ॥ किञ्चिदाशङ्क्य परिहरन्ति ॥ नन्वित्यादि ॥ तन्नूक्तमिति ॥ पूर्णत्वाद्यभङ्गसाधकं विरुद्धधर्माश्रयत्वं प्रागेव निर्णीतमित्यर्थः ॥ ननु ब्रह्मणः पूर्णकामत्वेन कामलीलाप्रयोजनाभावादुपपादनसापेक्षविप्रयोगादिक्लेशाङ्गीकारापेक्षया तदनपेक्षकामलीलाया अनुकरणमात्रत्वमेव ज्याय इत्यतः अनुकरणेत्यादि कुतोऽसंगतमित्याकाङ्क्षायां रसवत्त्वस्य बाधकस्य विद्यमानत्वात्तथेति वक्तुं रसवत्त्वं चोपपादयन्ति ॥ तथाहीत्यादि ॥ पूर्वश्रुतौ सर्वगन्ध इति मध्ये श्रावणाच्चेतनधर्मव्यवायाद्गुणविशेष एव तत्रोच्यते ॥ तथाच बहुव्रीहिणा कामवत्त्वरसवत्त्वयोरेव सिद्धिर्न कामादिरूपत्वस्यापि, समासद्वयाङ्गीकारे च वाक्यभेदापत्तिरित्याशङ्कानिवृत्त्यर्थं द्वितीयश्रुतिमाहुः ॥ तैत्तरीयकेपीत्यादि ॥ तथाचानया रसत्वे सिद्धे तस्य कामरूपत्वे पर्यवसानात्कामरूपत्वस्यापि सिद्धिरित्यर्थः ॥ अत्र पूर्वश्रुतौ रसत्वमात्रश्रावणेन तत्स्वरूपसंदेहानपायात्तदर्थमग्रिमां श्रुतिमाहुः ॥ रसमित्यादि ॥ अत्रायमर्थः ॥ रसो वै स इति श्रुत्या हि असद्वा इदमग्र आसीदित्यादिनोपक्रान्तस्य ब्रह्मण एव रसत्वं बोध्यते ॥ रसशब्दश्च रसनाग्राह्ये गुणे ॥ द्रवद्रव्ये सारभूतेऽर्थे ॥ आस्वाद्यानन्दजनके च तत्र तत्र प्रसिद्धस्तेषु प्रकृते कोऽर्थोविवक्षित इत्याकाङ्क्षायां रसं ह्येवायं लब्ध्वा आनन्दीभवति कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् ॥ एष ह्येवआनन्दयातीत्यनेन रसस्यानन्दत्वे प्राणधारणप्रयोजकत्वहृदयाकाशस्थत्वमानन्दजनकत्वं च तस्यैवोच्यते ॥ तेन हृदयस्थः प्राणितानन्दजनको य आनन्दः स रस इति सिध्यति ॥ तत्र यद्यानन्दोत्पत्तिरूप-

स्य कार्यस्य तत्तदवयवेष्वनुभूयमानत्वेनानन्दस्य सर्वशरीरव्यापित्वं तथापि उक्तश्रुत्या स मानसीन आत्मा जनानामिति श्रुत्यन्तरेण च मनस्येव तस्य विशेषस्थितिरिति निश्चीयते ॥ एवं सति रसशास्त्रप्रणाड्या जायमानो यो मानसो विकारः प्रमोत्रात्मा स रसात्मना भगवत एव कार्यभूतः एष ह्येवानन्दयातीति सावधारणश्रुतेः ॥ तथा तदंशभूतश्च ॥ एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः ॥ अत एव च प्रकृष्यमाणे तस्मिन् रसत्वप्रतीतिर्लौकिकानाम् ॥ तथा योगश्च ॥ ब्रह्मादिषु पुरुषपदप्रयोगवद्वाचकः । नचैवं सत्यानन्दमात्रस्यैव तथात्वप्रणाड्यामेव कुतो विशेष इति शङ्क्यम् ॥ रसस्वरूपस्यैव तथात्वात् ॥ नच मानाभावः ॥ लौकिकस्य प्रनाड्यभिव्यङ्ग्यत्वे सिद्धे तद्दृष्टान्तेनालौकिकोपि तथानुमातुं शक्यत्वात् ॥ अलौकिको रस प्रनाडीविशेषाभिव्यङ्ग्यः रसत्वात् लौकिकरसवदिति प्रयोगात् ॥ अनन्तरूपमिति श्रुत्या वास्तविकत्वाच्च तेनेदं सिद्धम् । कारणधर्माणामेव कार्येभिव्यक्ते संदेहनिरासाच्च । नचानित्यत्वापत्तिः ॥ ब्रह्मत्वादेव तन्निरासात् ॥ अत एव न मनोविकारत्वमपि ॥ नाप्यनेकरूपत्वं दोषः ॥ तस्य प्रनाडीकृतत्वेन वास्तविकरूपाबाधकत्वात् परब्रह्मैव रसशास्त्रोक्तप्रनाड्या हृद्याविर्भूतं सद्रस इति ॥ तत्र चिदंशो न्यग्भूत एव ॥ अत एव कृपिर्भूवाचक इति श्रुतौ सदानन्दत्वमेवोक्तम् ॥ नच भूशब्दस्य सत्तावाचकत्वात्सत्तानन्द इति भवति नतु सदानन्द इतीति शङ्क्यम् ॥ सत्ताया आत्मरूपत्वेन धर्मत्वाभावस्य व्याकरणमते सिद्धत्वात्सत एव सिद्धेः ॥ अतः परब्रह्मणः सदानन्दत्वेन प्रनाड्याविर्भूतेपि तथात्वमेव ॥ नन्वस्त्येवं तथाप्युक्तश्रुतौ मानसीनत्वसिद्धेरतिगुप्तस्यैव ब्रह्मणो रसत्वमुच्यते॥ तथासति बहिराविर्भूतत्वस्य भगवतोऽतिगुप्तत्वाभावेन रसत्वाभाव इति चेन्नैवम् । यत्रेदं वर्णनेनोपबृंहितं तत्र भगवान्न बहिः प्रकटः किंतु हृद्येवेत्युपपादितं बर्हापीडमित्यस्य स्वतन्त्रे ॥ यदापि बहिस्तदापि आसक्तिभ्रमन्यायेन मानसीन एवेति गुप्तत्वेन रसत्वस्याऽबाधात् ॥ नन्वेव सति वृत्तिविशेषरूपत्वान्न भगवानिति चेन्न । लोके वृत्त्या ग्राह्यस्य देशकालपरिच्छिन्नत्वेन तन्न देशे तदभावेपि विरहादौ संस्कारप्राबल्यादिना वृत्तिनिर्गमात् व्याप्तिः स्वीक्रियते ॥ न तथा प्रकृते देशकालापरिच्छिन्नत्वात् ॥ किंतु अनन्यभक्तिलभ्य-

त्वाद् या ईदृशी भक्तिस्तथात्राविर्भवति ॥ सा च मनोधर्म इति तद्भिन्नरूपत्वेन बहिराविर्भूतस्य मानसीनत्वेन वृत्तित्वाभावात् ॥ मायावादिमते वृत्त्यवच्छिन्नचैतन्याविषयावच्छिन्नयोश्चैतन्ययोरेकलोलीभावे बहिष्ठस्य वृत्त्यवच्छिन्नत्वेऽपि वृत्तित्वाभाववत् ॥ नन्वस्त्वेवं तथापि प्रकृतानुरोधात् शृङ्गारात्मकत्वमेवात्र वक्तव्यम् ॥ तस्य च परस्पराकाङ्क्षस्त्रीपुंरूपद्वयात्मकालम्बनद्वयाधीनास्थितिकत्वादत्रापि तथात्वमङ्गीकर्तव्यं तच्च भगवतो रसत्वे विरुध्यते ॥ एकालम्बनकत्वेन रसाभासत्वप्रसञ्जकत्वादिति चेन्न । आलम्बनत्वस्यापि सत्त्वात् कामिनां दर्शयन् देव्यामित्यस्य टिप्पण्यां रसात्मको रसवांश्च भगवानिति कण्ठरवेणोक्तत्वात् ॥ अत्रापि तथाङ्गीकाराच्च । न च विरोधः ॥ स्वप्रतिष्ठत्वस्याश्रौतत्वेन सर्वसंमतत्वात् ॥ यथान्येषां कामेन कामत्वं कामस्य तु स्वत एव ॥ तथाऽन्येषां रसेन सर्वत्वं, रसस्य तु स्वत इत्यस्यापि सुवचत्वाच्च ॥ तदप्रसङ्गात् ॥ तस्माद् बहिराविर्भूतस्यापि भगवतो रसत्वमबाधमेव ॥ तद् हृदि कृत्वाहुः ॥ रसेष्वित्यादि ॥ मुख्यत्वात् ॥ भरतसूत्रादौ तस्यैव प्रतिपादनेन तथात्वात् ॥ तद्रूपत्वमिति । उपदर्शितरीत्या आलम्बनत्वम् ॥ एतच्चेति ॥ रसरूपत्वं तदालम्बनत्वं च प्रपञ्चितमिति ॥ प्रथमे उद्देशेन इतराभ्यां तद्विमर्शेन च विस्तार्योक्तां प्रतिज्ञातां दिशमाहुः ॥ भगवानित्यादिना उक्तस्यार्थस्य श्रुतावस्फुटत्वेन श्रुतार्थापत्तिसिद्धत्वमाहुः ॥ अन्यथा श्रुत्युक्तेष्वारभ्योक्तमित्यन्तम् ॥ एवं रसरूपत्वं तद्रूपत्वं च समर्थयित्वा तयोरनुकृतित्वबोधकतां व्युत्पादयन्ति । नहीत्यादि ॥ श्रुतिभक्तानुभवेति श्रुतिश्च भक्तानुभवश्च ताभ्यामित्यर्थः ॥ विरुद्धधर्माश्रयत्वमुपबृंहयन्ति ॥ तदुक्तमित्यादि । एवं लीलाया अनुकरणमात्रत्वदूषणप्रसङ्गेन भगवतो रसत्वं तद्रूपत्वं च स्वरीत्या स्थापयित्वा परोक्तमुपगम्यापि स्थापयन्ति ॥ अथ कृत्वा चिन्तयति । परारोपितमङ्गीकृत्य स्वेष्टसाधनविचारः कृत्वाचिन्ता ॥ तथारूपत्वमिति ॥ पराधीनत्वम् ।

यत्तु दृश्यत्वेन प्रकाश्यत्वेन चादृश्यमग्राह्यं, न तत्र सूर्यो भातीत्यादिश्रुतिविरोधान्न सविशेषकथनं युक्तमिति । तदसत्, दृश्यत्वस्यापि श्रुतिस्मृतिसिद्धत्वात् । तथाहि । कश्चिद्धीरः

प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् । ज्ञानप्रसादेन विशुद्धस
त्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः । भक्त्या त्वनन्य-
या शक्य अहमेवंविधोऽर्जुन ! * ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च
परन्तप ! । शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति
तवेहितं जनाः * त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं
पदाम्बुजमित्यादि । एवं सत्युभयाविरोधायादृश्यत्वरूपिका श्रु-
तिरिन्द्रियादिसामर्थ्येन दृश्यत्वं निषेधति । दृश्यत्वरूपिका भगव-
दनुग्रहेणैव भगवतो दृश्यत्वं वदतीत्यवधारणीयम् । यतो भगव-
तैवोक्तम् । मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगादि-
ति । अत्रात्मयोगपदात् प्रसन्नः सन् स्वसामर्थ्यं दत्वा दर्शयतीति
ज्ञायते । ब्रह्माणं प्रत्यपि भगवद्वाक्यम् । मनीषितानुभावोऽयं मम
लोकावलोकनम् । अत एव सूत्रकारोऽप्याह दृश्यत्वपूर्वपक्षे ।
अपि संराधने प्रत्यक्षानुमानाभ्यामिति । अपीति पूर्वपक्षगर्हायां,
मूर्खः पूर्वपक्षीति । यतः सम्यगाराधने पश्यन्ति । कथमेवम् ? ।
प्रत्यक्षानुमानाभ्याम् । अनेकबाहूदरवक्त्रनेत्रं पश्यामीति प्रत्यक्षम् ।
श्रुवादीनामनुमापकत्वम् । ताभ्यामित्यर्थः । श्रुतिस्मृतिभ्या-
मिति वा । एवं सति मां सर्वे पश्यन्त्विति साधारणेच्छया प्रादु-
र्भावो, न सर्वेषां दर्शनसामर्थ्यमवतारदशायाम् । अन्यदा तु, नाहं
वेदैरिति, भक्त्या त्वनन्ययेति वाक्याच्च भक्त्यैवेति निर्णयः । भ-
क्तानां त्ववतारदशायामपि भक्त्यैव, न साधारणेच्छया । तद्भक्त्यैव
तदर्थमेव प्रादुर्भावात् । साधारणेच्छापि यतस्तदर्थैव । लोकमध्य
एव यतस्तेषां सुखजननम् । अन्यथा लोके स्वप्राकट्यं निष्प्रयो-
जनकं स्यात् । सर्वेषां भगवद्दर्शनेऽपि यन्मोहानपगमस्तत्र तदि-
च्छैव प्रतिबन्धिका । तस्य सत्यसङ्कल्पत्वात् । एवमेव भगवत्स्व-
रूपाज्ञानमपि । अलौकिकतेजोऽप्रदर्शनं लौकिकानुकरणं च ली-

लार्थमेव । अन्यथा लीलैव न सम्भवति । सर्वेषां च तदैव मोक्षः स्यात् । तथासति सृष्टिमर्यादोच्छेदः स्यात् । एवमेव प्रकाश्यत्वमपि ज्ञेयम् यदादित्यगतं तेजो जगद्भासयतेऽखिलम् * यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति वाक्यात् स्वतेजसा स्वस्य प्रकाश्यत्वमिति नातिविरोधि । सर्वव्यवहारविषयत्वं च भगवत्कृतमेव, नतु जीवेन स्वतः कर्तुं शक्यम् । अत एव सूत्रकारोऽप्याह । प्रकाशवच्चावैयर्थ्यादिति । अर्थस्तु पूर्वेणाकारे प्रतिपादितेऽपि, यतो वाचो निवर्तन्ते, तं त्वौपनिषदमित्यादिनिरूपितव्यवहाराविषयत्वविरोधो न परिहृतः, शास्त्रवैफल्यं चेत्यत आह । इदम् । यथा सौरादिप्रकाशो व्यवहार्योऽव्यवहार्यश्च नहि स्वतः सम्पादयितुं स्थापयितुं वा शक्यते । आगते तु सूर्ये मेघाद्यभावे च सान्निध्यमात्रेण व्यवहारः कर्तुं शक्यते । तथा लौकिकवाङ्मनोभिर्न शक्यते व्यवहर्तुम् । ईश्वरसान्निध्ये तु द्वयमाह श्रुतिः । कुत एतत् ? । अवैयर्थ्याद् । अन्यथैकस्याः श्रुतेर्वैयर्थ्यापत्तेरिति । दर्शनव्यवहारस्य श्रुतिसिद्धत्वमुक्तमेव । तथाच दर्शनव्यवहारन्यायेनापरस्यापि व्यवहारस्य निर्णयः । तथाचोक्तं श्रीभागवते । पश्यन्ति ते मे इत्युपक्रम्य साकं वाचं स्पृहणीयां वदन्तीति । यमेवैष वृणुते तेन लभ्य इत्यादिश्रुत्या च । ननु दर्शनं ज्ञानमेव, न तु चाक्षुषं श्रुत्या निरूप्यते, ब्रह्मणोऽरूपत्वादिति चेन्न । भक्त्या त्वनन्ययेति वाक्ये तु ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपेति ज्ञानदर्शनप्रवेशानां भिन्नतयैव निरूपणात् । रासादिरूपश्च व्यवहारः प्रमाणसिद्ध इति तत्र प्रसिद्धकामतद्भावरिरंसारमणादयोऽपि शुद्धब्रह्मधर्मा एवेति ज्ञेयम् । सर्वशक्तिरिति श्रुतौ, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतौ च सहजानन्तशक्तित्वेन निरूपितत्वेन सर्वार्थोपपत्तेः । तेन कामसमय

एवाकामोऽपि । निजचरणनखरसुषमालेशजिताशेषसुरसुन्दरीणामखिलस्त्रीरत्नभूतानां व्रजवरवधूनामनवद्यहृद्यकनकाचलेषु विहरन्नप्यात्माराम एव । अत एवात्मारामोऽपि तत्रोक्तः । प्रियावियोगेणावसादभावं भजमानोऽपि, तत्र वेत्थीत्यादिवचनैरजानन्नपि व्यापक एव, परमानन्दरूप एव, सर्वज्ञ एव । ननु प्रतियोग्यभावयोरेकावच्छेदेन स्थितिर्न वक्तुं शक्या, तथैव विरुद्धधर्माणामप्यतो नैवं वक्तुं युक्तमिति चेद्, न वयं वदामः, किन्त्वनुवदामो, न वयमत्र पर्यनुयोगार्हाः । यदनुवादस्तां श्रुतिं चेत् पर्यनुयोक्तुमुद्यतोऽसि, महत्ते साहसं खद्योतस्येवोदयाचलशिखरैकदेशस्थितिमात्रेण सकलजगत्तमःकपाटविपाटनपटुत्वाशक्यतया तरणिं पर्यनुयोक्तुमुद्यतस्य । अथ लोके तथा दर्शनात् तदनुसारेणैव च तदर्थस्य वक्तुमुचितत्वाच्छ्रुतित्वेनोभयस्यापि तुल्यत्वात् सगुणनिर्गुणपरत्वं कल्प्यत इति चेद्, हन्तैवं लोकानुसारेण तदर्थनिर्णये निर्द्धर्मकपदार्थस्यापि लोकेऽदर्शनात् सत्तादीनामपि कालाद्याधारत्वसमवायादिधर्मवत्त्वात्त्वदभिमतं ब्रह्मापि न सिद्ध्येच्छ्रुतिबलेनापि तुल्यम् । एवं सति लोकाप्रतीतं निर्द्धर्मकं वक्तुं चेदङ्गीकुरुषे, तदा लोकाप्रतीतामपि प्रतियोग्यभावयोरप्येकावच्छेदेन स्थितिमङ्गीकुरु । एवं सति श्रुत्यर्थो न लोकरीत्या निर्णेतुं शक्य इति सिद्धम् । अत एव श्रुतिरप्याह नैषा तर्केण मतिरपनेयेति । अलौकिकास्तु ये भावा न तांस्तर्केण योजयेदिति स्मृतिश्चेति पूर्वमेवावोचाम । किञ्च, भगवति श्रीयशोदास्तनन्धये सर्वे विरुद्धधर्मा दृश्यन्ते मृत्स्नोलूखलादिप्रसङ्गेषु । नहि दृष्टेऽनुपपन्नं नाम, व्याघातात् मायादिपक्षाणां तत्रैव निरस्तत्वात् । अथो अमुष्येतानेन तद्धर्मत्वेनैव च निरूपणात् । अत एव सूत्रकारोऽप्याह दर्शनाच्चेति ॥ अपिच, मायया प्रदर्शयतीति वदन् वादी प्रष्टव्यः ।

किं मायाशब्देन भगवत्सामर्थ्यं ब्रवीषि ? । उत तद्भिन्नाऽसद्रूपा असत्कार्यकर्त्रीति ? । आद्ये त्वोमिति ब्रूमः । नच स्वसामर्थ्येनैवासत् प्रदर्शितवानिति वाच्यम् । यः पृथिव्यां तिष्ठन् पृथिवीमन्तर इत्यादिश्रुत्या ब्रह्मधर्मत्वेनैव निरूपणात् । तादृशं चेद् ब्रह्म न स्यात्तदेवं वक्तुमवसरः स्याद्, नत्वेवम् । उक्तयुक्तेः । असत्प्रदर्शनं चासुरेष्वेव । यतो मोहनं तेषामेव भगवता क्रियते । अत्र च तादृशानामभावान्न तथा प्रदर्शनमिति सारम् । न द्वितीयः । विकल्पासत्वात् । तथाहि, सा किं स्वतन्त्रैव कर्त्री ? उत ब्रह्माधीना ? । नाद्यः । जडत्वात् । चेतनत्वेन त्वयाऽनङ्गीकारात् । द्वितीयपक्षे तु करणत्वं स्याद् वाशीवत् । तथाच सहजानन्तशक्तिमत ईश्वरस्य स्वरूपदर्शने का वाऽशक्तिर्यतस्तामुररीकुर्यात् । स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः । किञ्च, उक्तयुक्तिश्रुतिभ्यः सद्रूपस्वरूपं तया दर्शयतीति वक्तुमशक्यम् । एतेनैव सगुणत्वमपि प्रत्याख्यातम् । तद्धि प्राकृतसत्त्वादिगुणाकाररूपम् । तच्च स्वतः शक्तस्यानुपपन्नमित्युक्तम् । एतेनैव च ब्रह्मगताऽविद्या ब्रह्मगतविशेषकल्पिकेत्यपि पूर्वविकल्पगतद्वितीयपक्षो निरस्तः । ब्रह्मणि जीवातिरिक्ते त्वया तथाऽङ्गीकाराच्च । अङ्गीकारे वा तस्या उपाधिभावे प्रयोजिकेश्वरेच्छैव वाच्या तथाच सर्वभवनसमर्थस्येश्वरस्य त्वदभिमतरीत्या तथा करणे हेत्वभावः । इच्छादीनामपि त्वन्मते तदुपाधिभावोत्तरकालीनत्वादसम्भवश्च । आविद्यकत्वे स्वाभाविकत्वहान्या श्रुतिविरोधश्चेति दिक् ॥

एवं लीलाया अनुकरणमात्रताखण्डने प्रसङ्गेन भगवतो रसरूपत्वं तद्वत्त्वं च समर्थितं तदेतन्नैयायिका न मन्यन्ते इति तान् प्रति वक्तुं तन्मतमाहुः ॥

यस्त्वित्यादि ॥ दूषयन्ति ॥ तन्त्वित्यादि ॥ ईश्वरस्येति ॥ स्वाभाविकशरीरराहित्येन जन्यशरीरमादिशन्तः ॥ तदुपपादयन्ति ॥ तथा-

हीत्यादि ॥ सावयत्वेनानुमितेति ॥ अत्र क्षित्यादिकं कार्यं सावयवत्वात् घटवत् यन्नैवं तन्नैवं आकाशवदिति प्रयोगो द्रष्टव्यः ॥ क्षित्यादिपक्षकेत्यादि ॥ क्षित्यादिकं कर्तृपूर्वकं कार्यत्वात् घटवत् । व्यतिरेके आकाशादिवदिति प्रयोगोऽत्र । नन्वनेनानुमानेन साध्यतावच्छेदकशरीरनिविष्टस्य कर्तुरेव सिद्धेर्नेश्वरस्येति शङ्कायां तेन संसाधयति ॥ कर्त्ता चेत्यादि ॥ द्व्यणुकादिनगरसागरान्तक्षित्यादिचतुष्टयकर्त्ता तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमान् कर्तृत्वात् यो यत्कर्त्ता तदुपादानगोचरापरोक्षज्ञानादिमान् घटकर्तृकुलालवत् यन्नैवं तन्नैवं घटाकाशकर्त्रस्मदादिवदित्यनुमाने दृष्टान्तभूतकर्ता लोक एतादृश एव दृष्ट इति तादृशपक्षकरणे तत्कर्तृत्वेनानुमानात्सिद्ध्यन् पक्षतावच्छेदकशरीरानिविष्टद्व्यणुकाद्युपादानभूतपरमाण्वादिगोचरापरोक्षज्ञानादिमान् सेत्स्यति ॥ ततः, तादृशज्ञानवान् नित्यः आत्मत्वात् अस्मदाद्यात्मवत् ॥ सर्वज्ञः सर्वकर्तृत्वात् यो यत्कर्त्ता स तत्संबधिसर्वतदुपकरणादिविषयकज्ञानवान् घटादिकर्तृवत् । यन्नैवं तन्नैवं तदकर्त्रस्मदादिवदित्यनुमानाभ्यां नित्यः सर्वज्ञ एव युक्तो भवतीति धर्मत्रयविशिष्टेश्वरसिद्धिरित्यर्थः ॥ नन्वेवं कर्तृत्वसिद्धौ कथमकर्तृत्वापत्तिरित्यत आहुः ॥ तथाचेत्यादि ॥ लोकदृष्टान्तेन साधने, ईश्वरः शरीरी कर्तृत्वात् लौकिककर्तृत्ववत् यन्नैवं तन्नैवं परममुक्तवदित्यनुमानात्सशरीरस्य कर्तृत्वे सिद्धे सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म शरीरजन्यं चेतनकर्मत्वादस्मदादिशरीरजन्यक्रियावदित्यनुमानात्स्वया जीवादृष्टजन्यशरीरे भूतावेशवदावेशाङ्गीकारेणानुमतत्वाच्चेश्वरे शरीरत्वासिद्धिर्वादिप्रतिवादिनोः समत्वान्निष्प्रत्यूहा ॥ तच्छरीरस्य नित्यत्वे एव परं विवादः ॥ तत्र च तच्छरीरं नित्यं सर्गाद्यकालीनद्व्यणुकारम्भपूर्वकालीनद्रव्यत्वात् परमाण्वादिवत् यन्नैवं तन्नैवमस्मदादिशरीरवदित्यनुमानेन नित्यस्यैव शरीरस्य सिद्धेस्त्वदभिमतशरीरस्य तत्र भूतावेशन्यायकप्रवेशस्य चासिद्ध्या अशरीरस्याकर्तृत्वापत्तिरपि निराबाधेत्यर्थः ।

ननु कामादिलीलाया अनुकरणमात्ररूपत्वेन प्रियाविप्रयोगतज्जनितक्लेशादयः पूर्णे ज्ञानैकघने परमानन्दस्वरूपे न वक्तुमु-

चिता इति चेत्, सत्यम् । नोचिता एव स्युर्यदि विप्रयुक्तत्वादिना पूर्णत्वादिकं भज्येत । नत्वेवम् । तत्तूक्तं प्रादेशमात्रस्यैवाभिविमानित्वादिनिरूपणेन ॥ अनुकरणमात्रत्वं लीलाया असङ्गतम् । तथाहि । भगवत्स्वरूपं हि श्रुत्यैकसमधिगम्यम् । तत्र च, सर्वकामः सर्वरस इत्यनेन सर्वकामरूपत्वं तद्वत्त्वं च, सर्वरसरूपत्वं तद्वत्त्वेन सर्वरसभोक्तृत्वं च प्रतिपाद्यते तैत्तिरीयकेऽपि, रसो वै सः रस ᳪ ह्येवायं लब्ध्वाऽऽनन्दीभवतीति पठ्यते । रसेषु च शृङ्गाररसस्य मुख्यत्वात् तस्य च रत्याख्यस्थायिभावरूपत्वात् तद्रूपत्वं तद्वत्त्वं चावश्यं वाच्यम् । तत्र व्रजसुन्दरीभावावलम्बनविभावत्वेन तद्भावानुसारेणैव सर्वकरणैस्तद्रसरूपत्वम् । एतच्च, बर्हापीडेति, अक्षण्वतामिति, चूतप्रवालेति श्लोकविवरणे प्रपञ्चितं पितृचरणैरित्यत्र दिङ्मात्रं प्रदर्श्यते । भगवानपि तासु तादृशभाववानिति तद्वत्त्वं भगवतः स्वरूपत्वं च भगवति भावानामपि स्वरूपातिरिक्तानामभावात् । अन्यथा श्रुत्युक्तं रसभोक्तृत्वं रसस्वरूपत्वं च भज्येत । एतस्य रसस्यैतादृशत्वादेव तथा मन्तव्यम् । तथाच यावती तस्य रसस्य मर्यादा तावती सर्वापि भगवत्यस्तीति मन्तव्यम् । अन्यथा रसत्वव्याहतिरित्युक्तम् । नह्यनुकरणे स्वस्मिन् रस आपद्यते, तासां वा रसस्योत्पत्तिः । अन्योन्यमनाविर्भावे तद्रसत्वं तत्र नास्तीति यतस्तद्रसशास्त्रमर्यादा । अत एव गजदृष्टान्तः सर्वत्र, आत्तगजेन्द्रलीलः, यथा मदच्युद्द्विरदः करेणुभिः, श्रान्तो गजीभिरिभराडिव भिन्नसेतुरित्यादि । अतः शृङ्गाररसस्वरूपत्वेन प्रियाविप्रयोगतत्कार्यतत्सङ्गमतत्कार्याः सर्व एव सम्भवन्तीति न ब्रह्मत्वक्षतिः । वस्तुन एव तथात्वात् प्रत्युत ब्रह्मत्वसाधका एव । विरुद्धसर्वधर्माधारत्वात् । वस्तुतस्तु ब्रह्मगतधर्मेषु विरोध एव नास्ति, श्रुतिभक्तानुभवसिद्धत्वादित्युक्तम् ।

तदुक्तं श्रीभागवतेऽपि, नहि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनवितर्कविचारप्रमाणाभासकुतर्ककलिलान्तःकरणदुरवग्रहवादिनां विवादानवसर इति सर्वमनवद्यम् ॥ अथ कृत्वा चिन्तयोच्यते । यदि ग्रहिलतया आत्मारामेत्यादय एव ब्रह्मणि, नान्ये धर्मा इति मनुषे तदापि वदामः। अस्तु त्वदुक्तम् । परं तु सा ब्रह्मधर्ममर्यादाऽत्र भक्तेष्वप्यतिशयितानुग्रहेण, तद्भक्त्यतिशयेन च स्वरूपमर्यादामप्यतिक्रम्य तदधीनत्वं प्राप्तः सन् यथैव तदभीष्टं भवति तथैव लीलां कुर्वन्नुक्तसर्वभावान् स्वयमेव भजत इति भगवतः पुष्टिरूपमिदमुच्यते । तदुक्तं भगवता दुर्वाससं प्रति । 'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज' इत्युपक्रम्य 'वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा' इत्यन्तेन । अत्र सत्पदद्वयेन स्वस्य तेषु तथा रूपत्वं, तेषां च प्रतिपत्तिर्न माययेति ज्ञाप्यते । तथा सति तु सत्त्वं न स्यात् । नचानीशत्वप्रसङ्गः । एतस्यैव महदैश्वर्यरूपत्वात् । नह्यन्यः स्वरूपमर्यादां त्यक्तुं समर्थः । अत एव भिन्नसेतुरिति विशेषणम् । अत एवाचिन्त्यमहिमत्वं श्रुतिरप्याह, यतो वाच इत्यादिना । अतो यथा यथा शङ्कसे, तथा तथाऽधिकब्रह्मत्वमेवायातीति चिरं जीव । यत्तु जीवादृष्टसंपादितशरीरं भूतावेशन्यायेनाविश्येश्वरः कार्यं कृत्वाऽऽवेशं त्यजति, नत्वीश्वरे स्वाभाविकं शरीरादिकमस्ति । ज्ञानेच्छाप्रयत्नातिरिक्तविशेषधर्माभावादिति । तत्तूपेक्ष्यम् । ईश्वरस्याकर्तृत्वापादकत्वात् । तथा हि । तन्मते हि सावयवत्वेनानुमितकार्यत्वाक्षित्यादिपक्षककर्तृपूर्वकत्वसाध्यककार्यत्वलिङ्गकानुमानेन जगत्कर्तृत्वेनैवेश्वरसिद्धिः। कर्ता चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमानेव लोके दृष्ट इति द्व्यणुकादिनगरसागरान्तस्य च पक्षीकरणे च तत्कर्तृत्वेन

सिद्ध्यँस्तदुपादानगोचरापरोक्षज्ञानादिमान् नित्यः सर्वज्ञ एव च भवतीति तादृक्तत्सिद्धिः ॥ तथा, यथा लोके ज्ञानादिमत एव कर्तृत्वं दृष्टमितीश्वरेऽपि ज्ञानादिसिद्धिरेव शरीरिण एव लोके कर्तृत्वं दृष्टमितीश्वरेऽपि शरीरित्वसिद्धिर्निष्प्रत्यूहा । कर्तृत्वस्य शरीरित्वव्याप्यत्वात् । नन्वेवं कार्यत्वेनानित्यत्वानुमाने घटादिषु रूपसाहचर्यं लिङ्गस्य दृष्टमिति तद्विशिष्टस्यैव तस्य व्याप्यत्वे रूपाभाववति वायौ तदसिद्धिः । तत्सिद्धौ वायौ रूपस्यापि सिद्धिः स्यात् । नत्वेवम् । प्रत्यक्षबाधात् । ननु न साहचर्यमात्रं प्रयोजकम् । व्याप्तिरेव प्रयोजिका । सा च कार्यत्वानित्यत्वयोरेवेति वायावपि तत्सिद्धिरनित्यत्वसिद्धिश्चेत्, तर्हि प्रकृतेऽपि कर्तृत्वप्रयोजकं ज्ञानेच्छाप्रयत्नवत्त्वमेवेति शरीरित्वस्य तत्साहचर्यवत्त्वेऽपि न तत्प्रयोजकत्वमतो नेश्वरे तत्सिद्धिः । अन्यथा दृष्टान्तीयाशेषधर्मापत्तिः पक्षे स्यात् । तथाच घटदृष्टान्तेन जलेऽनित्यत्वसाधने पृथिवीत्वादिकमपि सिध्येत् । किंच, चेष्टां विना यत्नमात्रेण कुलालादेर्घटादिकरणे सामर्थ्याभावाच्चेष्टाश्रयस्य शरीरस्य सहकारित्वमस्तुनाम । ईश्वरस्तु प्रयत्नमात्रेणैव सर्वकरणसमर्थ इति न तदपेक्षा । किंच शरीरस्य परिच्छिन्नत्वनियमेन युगपत् सकलदेशगतकार्यानुत्पत्तिप्रसङ्ग इति चेन्नैतत् साधीयः । ज्ञानादिमत्त्वस्येव शरीरित्वस्याप्यन्वयव्यतिरेकसिद्धत्वात् । तथाहि । यत्र कुलालादिषु कर्तृत्वं तत्र शरीरित्वम् । यत्रच मुक्तात्मस्वशरीरित्वं, न तत्र कर्तृत्वम् । अत ईश्वरस्यापि कर्तृत्वाच्छरीरित्वमवश्यमङ्गीकर्तव्यम् । लोके तथा दर्शनात् । अन्यथेच्छादिकमपि न सिध्येदविशेषात् । अथ चेष्टां विनापि प्रयत्नमात्रेण कार्यकरणे समर्थत्वादीश्वरस्य तदाश्रयत्वसिद्धिरिति ब्रूषे तदेच्छाप्रयत्नौ विनापि ज्ञानमात्रेणैव तथाकरणसमर्थत्वादीश्वरस्य नेच्छादि-

सत्त्वमित्यपि सुवचम्। नच शरीरस्य परिच्छिन्नत्वेनोक्तदोषापत्तिरिति वाच्यम्। अन्यथाऽनुपपत्तिबलात्। सिद्ध्यच्छरीरं यावतानुपपत्तिपरिहारस्तावद्रूपमेव सेत्स्यति। शरीरपरिच्छेदानित्यत्वानियमस्त्वनुपपन्नः। पक्षधर्मताबलादपरिच्छिन्ननित्यस्यैव सिद्धेः। वस्तुतस्तु परिच्छेदानित्यत्वाद्यनुपपत्त्युद्भावनस्य शरीरसिद्ध्यसिद्धिव्याहतत्वेनासम्भव एव। अन्यथा ज्ञानस्याप्यनित्यत्वनियमेनेश्वरज्ञानस्याप्यनित्यत्वप्रसङ्गः।

एवं दूषिते स्वोक्ते तत्समर्थनाय नित्यशरीरं प्रत्याख्यातुं प्रयतते।

नन्वेवमित्यादि॥ अयमर्थः। ईश्वरे यच्छरीरं साध्यते तच्छरीरमीश्वराद्भिन्नमभिन्नं वा॥ नान्त्यः॥ आत्माभिन्नस्यापि तस्यासिद्धत्वात्॥ अतो भिन्नं नित्यसंबद्धं चाङ्गीकार्यम्। तथासति यथा कार्यत्वेन कर्तृत्वपूर्वकत्वसाधनं कुर्वतश्चेतनकार्यत्वं शरीरजन्यत्वसाहचर्यस्य भूयोदर्शनेन शरीरजन्यत्वविशिष्टकार्यत्वस्य व्याप्यत्वात्साध्यतावच्छेदकशरीरनिविष्टे कर्तरीश्वरे तादृशशरीरसिद्धिस्तदसिद्धौ च कर्तृत्वासिद्धिः। एवं वायुरनित्यः कार्यत्वाद्घटवदित्यनुमानेपि लिङ्गस्य तथा स्यात्॥ तथाच विशिष्टस्य व्याप्यत्वे अनिष्टापत्तिः॥ केवलस्य व्याप्यत्वे च शरीरस्यासिद्धिरित्युभयथापि तव मतमसंगतमित्यर्थः। तत्र समाधत्ते॥ नत्वेवमित्यादि॥ तथाच सर्वत्र विशिष्टस्य व्याप्यत्वं न केवलस्यापि न॥ किंतु यत्र यथा प्रमाणसिद्धं तत्र तथाङ्गीकार्यम्॥ तथा सति न कोपि दोष इत्यर्थः॥ एतमपि विभज्य व्याप्यत्वपक्षमनूद्य पुनः स्वेष्टं साधयति॥ नान्वित्यादि। तर्हीत्यादि च॥ ननु प्रमाणान्तरेणाबाधितत्वात्कथं न प्रयोजकत्वमत आह॥ अन्यथेत्यादि। प्रयोजकत्वं कुतो ऽवगतं प्रत्यक्षादनुमानाद्वा॥ नाद्यः। ईश्वरस्याप्रत्यक्षत्वात्, द्वितीये तु दृष्टान्त एव दृष्टत्वात्तद्धर्मत्वमेव नतु पक्षधर्मत्वं, तथा सति जलपक्षकानुमाने पुनरिष्टापत्तिरित्यर्थः॥ ननु जलपक्षकानुमाने पृथिवीत्वादिकं नानित्यत्वप्रयोजकं परमाणुष्वपि सत्त्वात्॥ प्रकृतानुमाने तु ज्ञानेच्छाप्रयत्नानामेव कर्तृत्वप्रयोजकत्वाङ्गीकारे चेष्टां विना कुलालादेः कर्तृत्वप्रसङ्ग इति क्रिया आवश्यकी, सा च शरीरनिष्ठेति तदाधारस्य शरीरस्य प्रयोजकत्वमवर्जनीयमित्यत आ-

ह ॥ किञ्च चेष्टामित्यादि ॥ ननु प्रयत्नमात्रेण सर्वकरणसामर्थ्यमत्यन्ता-परिदृष्टं कल्पनीयम् । नित्यत्वं तु परमाणुप्रभृतिषु दृष्टमिति परममहत्यपि शरीरं संभवतीति नित्यशरीराङ्गीकरणमेव न्याय्य इत्यत आह ॥ किञ्च शरीरस्येत्यादि ॥ ईश्वरशरीरं परिच्छिन्नं शरीरत्वादस्मदादि-शरीरवदित्यनुमानेन परिच्छेदापत्त्या एवमेव नित्यत्वापत्त्या च त थेत्यर्थः । तस्मादशरीर एवेश्वरः कर्त्तेति प्राप्ते दूषयन्ति ॥ नैतदि-त्यादि ॥ अत इति ॥ भूयः साहचर्यात् । तथाच लोकरीत्या विचा-रकस्य तव तदावश्यकमित्यर्थः । ननु लोके तथादर्शनेऽपि पक्षे दृष्टान्तीयाशेषधर्मापत्त्या साहचर्यमात्रस्याप्रयोजकत्वात्तन्न युक्त-मित्यत आहुः ॥ अन्यथेत्यादि ॥ व्याप्तिबलसिद्धस्यानङ्गीकारे । अय-मर्थः । साहचर्यमात्रेत्यत्र मात्रपदं किं यावत्तत्परमुत भूयोदृष्टतत्प-रम् । अन्त्ये त्वोमिति ब्रूमः । लोहलेख्या पृथिवीत्वादित्यादौ भूयः साहचर्यस्याप्यप्रयोजकत्वदर्शनात् पूर्वोक्तदोषाच्च । आद्ये तु व्याप्ते-रप्यप्रयोजकत्वापत्त्यानुमानस्यैवोच्छेदाद् इच्छादेरप्यसिद्धेस्त्वन्मत-स्याप्यसिद्धिरित्यर्थः । ननु न मन्मतासिद्धिः । शरीरकर्तृत्वादि-त्यनुमानस्य अशरीरो महासमर्थत्वादित्यनेन सत्प्रतिपक्षत्वात् । तस्य च चेष्टां विनेत्यादिना प्रागेव सूचितत्वात् । नचात्यन्ताऽपरि-दृष्टकल्पनं दोषः । आस्तिकवादिनामीश्वरस्यावश्यकत्वेनान्यथानुप-पत्तिसिद्धत्वादितिशङ्कायामाहुः ॥ अथेत्यादि ॥ तथाच तादृक्साम-र्थ्याङ्गीकारेऽपि तद्दोषतादवस्थ्यमित्यर्थः । ननु शरीराङ्गीकारेऽपि ता-दवस्थ्यम् । चेष्टाश्रयत्वेनाङ्गीक्रियमाणे तस्मिन् व्यापकत्वस्य महा-कार्यकर्तृत्वेनाणुत्वस्य च वक्तुमशक्यतया मध्यमपरिमाणकस्यैव त-स्य सिद्धावनित्यत्वापत्तिर्युगपत्सकलकार्यानुत्पत्तिप्रसङ्गस्य च दुर्वा-रत्वादित्यत आहुः ॥ नचेत्यादि ॥ यादृशेन यदात्मकेन यावत्परिमा-णकेन युगपत्सकलकार्यानुत्पत्तिपरिहारस्तावद्रूपं तादृशं तदात्मकं तावत्परिमाणं तत्पूर्ववर्ति नित्यं, तदुत्पादनाऽनुकूलक्रियाशालि च सेत्स्यति । तथाचान्यथानुपपत्तिबलात्सर्वकरणसामर्थ्यं यथा त्वया-ङ्गीक्रियते तथात्राप्यनुसन्धेयम् । युक्तेस्तुल्यत्वादित्यर्थः । ननु मन्मते सामर्थ्यस्य तथाङ्गीकारेऽपि न कस्यापि नियमस्य भङ्गस्तव तु शरीरपरिच्छेदान्नित्यत्वादिनियमस्य भङ्ग इत्यत आहुः ॥ शरीरे-त्यादि ॥ पक्षधर्मताबलादिति ॥ द्व्यणुकादिनगरसागरान्तं तत्कर्ता

वा यथायथं पक्षस्तद्धर्मस्तावत्त्वं तत्कर्तृत्वं च तथा तावद्व्यासज्ज्य-वृत्तित्वं तावदुत्पादनानुकूलक्रियाशालित्वं च । तदेतत्तदैव संगच्छ-ते यदा तच्छरीरं तावत्कार्यदेशव्यापि तावत्पूर्ववर्ति च भवति, नान्यथेति । व्यासज्ज्यवृत्तित्वं तावदुत्पादनक्षमक्रियावत्त्वयोः स्व-रूपसामर्थ्यात्तथेति सनियमस्तवानित्यशरीरवादिनोऽपि मतेऽनुपप-न्न इत्यर्थः । नन्वेवमन्यधर्मेणान्यधर्मसाधने घटः अनित्यः कुलाल-जन्यत्वाद् घटान्तरवदित्यादौ पक्षधर्मभूतो घटत्वादिर्नित्यव्यापक-त्वादिबलात् कुलालादिशरीरस्यापि तथात्वसिद्धिरित्यप्रयोजकमिदं साधनम् । तथा व्यधिकरणधर्मसाधने तद्बलस्य प्रयोजकता चेत् सुतरां समानाधिकरणेऽपि स्यात् । तथा सति घटादीनामपि तथात्व-प्रसङ्गः । यदि द्व्यणुकायोजनं सामर्थ्यबलेनाशरीरः कुर्यात्पश्चात्कि-मिति प्रविशेत् । प्रविशन् वा असमर्थः कथं न स्यादित्यादितर्केण पक्षनित्यत्वापत्त्या ईश्वरस्याप्यसिद्धिरिति महानेवानय इत्यत आहुः ॥ वस्तुत इत्यादि ॥ अशरीरकर्तृवादिमते असिद्धिव्याहतं सशरीरक-र्तृवादिमतेऽन्यथानुपपत्तिबलात् सिद्ध्यत् सर्वानुपपत्तिपरिहारपूर्वकं सच्चिदानन्दात्मकमीश्वराऽभिन्नमेव सिद्ध्यति सिद्धिव्याहतमतस्त-थेत्यर्थः । ननु तर्हि नियमस्य का गतिरिति चेत्तत्राहुः ॥ अन्यथेत्या-दि ॥ तथाच तव मते नियमभङ्ग इति वृथैवायं पर्यनुयोगस्तुल्यप-रिहारत्वादित्यर्थः ॥

एवमेकं मतं दूषयित्वा पुनर्मतान्तरं दूषयितुमुपक्षिपन्ति ॥

यत्त्वीश्वरस्य कर्तृत्वेन शरीरत्वसाधने ईश्वरासिद्धावाश्रया-सिद्धिः । तत्सिद्धौ च धर्मिग्राहकप्रमाणेनाऽशरीरस्यैव सिद्धत्वेन तद्बाध इति । तत्त्वविचारितरमणीयम् । तथाहि । अत्र धर्मिग्राहक-प्रमाणं किमिति भवान् पृच्छ्यते । कार्यलिङ्गकमनुमानमिति चेद् ब्रवीति भवाँस्तदानेन कर्ता परं सिध्यति नान्यत् । ननु स-त्यमेतत्, परन्तु कर्ता स्वयं कर्तृत्वेन सिद्ध्यन् स्वकर्तृत्वनिर्वाहक-मादायैव सेत्स्यतीति वदामः । अहो किं तन्निर्वाहकं, ज्ञानेच्छाप्र-यत्ना एव । कुत एतत् । यतो लोके कार्यकर्तृत्वं तद्वतामेव दृष्टं, न तद्रहितानाम् । तर्हि शरीरस्यापि तत्समानयोगक्षेमत्वाज्ज्ञाने-

च्छाप्रयत्नशरीरत्वानेव सेत्स्यति । अन्यथा तु ज्ञानादिकमपि न सेत्स्यति, लोके दर्शनस्य समानत्वादिति बुद्ध्यस्व । ननु शरीरस्य महत्त्वेनोद्भूतरूपत्वेन च चाक्षुषत्वं कथं न स्यात् ? । लौकिकप्रत्यक्षाविषयत्वादिति ब्रूमः । श्रूयते हि देवानामपीन्द्रादीनामप्रत्यक्षत्वं विग्रहवतां, किं पुनरखिलदेवदेवस्याप्रत्यक्षत्वे शङ्का नाम । किञ्च, शङ्कानां तत्सिद्ध्युत्तरकालीनत्वात् तत्सिद्ध्यनन्तरमपराहतत्वेनैव नोदयसम्भव इति सङ्क्षेपः । एतेन कार्यस्य शरीरादिमत्कर्तृपूर्वकत्वनियमः प्रत्यग्रजायमानाङ्कुरादाविव शरीरिणः कर्तुरनुपलम्भान्निरस्त इति निरस्तम् । उक्तयुक्तिभिस्तत्रापि शरीरिकर्तृकत्वस्यैव सिद्धेः । अतो ज्ञानदुर्बलव्यामोहमात्रपरमेतन्मतं, न तु सच्छास्त्रीयमिति विद्वद्भिरुपेक्ष्यम् । एतदपि त्वन्मतानुसारेणैवोक्तम् । अस्माकं तु प्रति सत्कर्णजिह्वाग्रजागरूकोक्तश्रुतिस्मृतिपुराणवाक्यतत्त्वसूत्रभेरीघोषोद्घुष्टतया सर्वतःपाणिपादान्तत्वेनाचिन्त्यानन्तशक्तिमत्त्वेनैव भगवान् सिद्ध इति नानुमानमशकशुङ्कारापेक्षापीत्यलं प्रसक्तानुप्रसक्त्या ॥

यस्त्वित्यादि ॥ ईश्वरसिद्धावाश्रयासिद्धिरिति जीवतुल्यतापत्त्या ईश्वरासिद्धावाश्रयासिद्धिरीश्वरे पक्षे पक्षतावच्छेदकासिद्धिः ॥ तद्बाध इति ॥ शरीरित्वबाधः पक्षे साध्यशून्यत्वम् । तथाचैवं दोषद्वयापत्तेस्तत्साधनमसङ्गतमित्यर्थः । एतद् दूषयन्ति ॥ तन्वित्यादि ॥ अन्यथेत्यादि ।' निर्वाहकं विहाय केवलस्य कर्त्तुः सिद्धौ । अत इदमपि मतमसङ्गतमित्यर्थः । शरीरसिद्धौ बाधकान्तरमाह ॥ नन्वित्यादि ॥ ईश्वरशरीरं चाक्षुषं महत्त्वे सत्युद्भूतरूपत्वात् अस्मदादिशरीरवदित्यनुमानेन चाक्षुषत्वसिद्धौ चाक्षुषं कथं न स्यादित्यर्थः । अत्र समादधते ॥ लौकिकेत्यादि ॥ तथाच अचाक्षुषं लौकिकप्रत्यक्षाऽविषयत्वाद् इन्द्रादिशरीरवदित्यनुमानात् । पूर्वानुमानं लौकिकप्रत्यक्षविषयरूपोपाधिग्रस्तमिति न तेन तत्सिद्धिरित्यर्थः ।

एवं नैयायिकमतं निरस्य तेनैव मीमांसकमतं निरस्यन्ति ।

एतेनेत्यादि ॥ न्यायबलात् कर्तृसाधनेन कार्यस्येत्यादिनोक्तो नैयायिकनियमः शरीरिणः कर्तुरनुपलम्भात् घटदृष्टान्तवत् प्रत्यग्र-जायमानाङ्कुरदृष्टान्तेन कार्यत्वस्य हेतोर्विपक्षगामितया नैकान्तिक-त्वावगमादपि निरस्त इति मीमांसकमतं निरस्तम् । तत्र हेतुः ॥ उ-क्तयुक्तिभिरित्यादि ॥ अङ्कुरादौ साध्यसन्देहस्यानन्यथात्वेनाङ्कुरा-देः पक्षसमतया विपक्षत्वाभावेन कार्यस्य सद्धेतुत्वेऽङ्कुरादावपि क-र्तृतानिर्वाहकत्वपक्षधर्मताबलसिद्ध्यसिद्धिव्याघातानवसरपराहतत्व-रूपाभिः साधकबाधकयुक्तिभिः शरीरकर्तृकत्वे कर्त्रनुपलम्भस्या-ऽप्यप्रयोजकत्वात्तेनापि नियमस्याबाधात्तथेत्यर्थः ॥ एवं न्यायेन सा-धयित्वा तस्याऽनुपयोगित्वायाहुः ॥ एतदपीत्यादि ॥ अयमर्थः । सांख्यास्तावत् प्रकृतेः कर्तृत्वमङ्गीकृत्य ईश्वरं न मन्यन्ते । तथाहि । प्रत्यक्षेणानवगम्यमानस्येश्वरस्य कार्यत्वादिलिङ्गकानुमानेन कर्तृतया साधने तादृशप्रकृतिसिद्ध्याऽर्थान्तरत्वेन तदसिद्धिः ।तस्य कर्तृतानिर्वा-हकमादायैव सिद्ध्यङ्गीकारे तु तुल्ययोगक्षेमत्वाच्छरीरस्यापि सिद्धिः । सशरीरेश्वराङ्गीकारे तु शरीरवद्रागस्याप्यन्वयव्यतिरेकासिद्धत्वा-द्रागीश्वरस्य सिद्ध्या तस्य जीवतुल्यतापत्तिर्नित्यमुक्तत्वहानिश्च । नच प्रकृतेर्जडत्वात्कर्तृत्वानुपपत्तौ तदधिष्ठातृत्वेन विवक्षितरूपस्यैवे-श्वरस्य सिद्धिरिति वाच्यम् । अधिष्ठातृत्वस्यैव विचार्यत्वात् । त-थाहि । किं नामाधिष्ठातृत्वम् । प्रकृतिनियामकत्वं वा तत्संनिहितत्वं वा तस्यां प्रतिबिम्बितत्वं वा । नाद्यः । चेष्टां विना ज्ञानादिमात्रेण तथात्वाङ्गीकारे जीवानामपि तथात्वापत्तेस्तथा सत्यनेकेश्वरापत्तेश्च। न द्वितीयः । तत्राप्युक्तदोषापत्तेः । तत्संनिधानस्य सर्वेषु तौल्यात् । न तृतीयः । प्रतिबिम्बिते शरीरे मणौ च चलति शरीरमणिचलन-प्रतीतिवत् प्रकृतिकर्तृत्वेनैव तस्य स्वस्मिन् कर्तृत्वाभिमानत्वात् । स्वातन्त्र्यासिद्ध्या पारिभाषिकत्वापत्तौ विवक्षितरूपेश्वरासिद्धेः । किञ्च ज्ञानादिमात्रेणात्मनो जडनियामकत्वाङ्गीकारे मृतशरीरेऽप्या-हारादिक्रियापत्तिः । तदभावात्तस्याः प्राणबुद्ध्यादिकार्यत्वेन मृतश-रीरे च तेषाम् अभावेन तदभावाज्जीवच्छरीरेऽपि तेषामेव नियामक-त्वसिद्ध्याऽऽत्मनि तदभावात् । अतः पुरुषच्छायापातेन चेतनत्वापन्नस्य बुद्ध्यादेरन्तःकरणस्यैवाधिष्ठातृत्वं, न तु तटस्थस्यात्मनः । अग्निसम्ब-न्धेन लोहस्य दाहकत्ववत् । अतो न चैवमपीश्वरसिद्धिः । किञ्च तस्य

स्वातन्त्र्येण कर्तृत्वेऽकृताभ्यागमादिप्रसक्तिः । कर्मसहकारित्वेऽनीश्वरत्वापत्तिः । तथा स्वार्थं जगत्करणेऽनाप्तकामत्वापत्तिः । परार्थं करणे वैषम्यनैर्घृण्यादिप्रसक्तिः । अतः प्रकृतिरेव कर्त्री, प्रधानाज्जगज्जायते इति श्रुतेः । नच, स हि सर्ववित्सर्वकर्तेति श्रुतेरीश्वरस्य कर्तृत्वं शङ्क्यम् । एतस्य मुक्तात्मोपासासिद्धात्माऽन्यतरप्रशंसापरत्वादित्याहुः ।

तथा रामानुजाचार्याश्च । क्षित्यादिषु सावयत्वेन कार्यत्वमपि नानुमातुं शक्यम् । अकार्यम् अशक्यक्रियत्वात् । अशक्योपादानविज्ञानत्वात् । महाभूतशब्दवाच्यत्वाच्च आकाशवदिति भट्टभास्करोक्तैः प्रत्यनुमानैस्तस्य सत्प्रतिपक्षत्वात् । यदि चाकाशे निरवयत्वस्यानुकूलतर्कस्य सत्त्वेन क्षित्यादिवायुपर्यन्तेषु च तदभावेनोक्तहेतूनामप्रयोजकत्वं विभाव्यते तदापि कार्यत्वेन हेतुना बुद्धिमत्कर्तृपूर्वकत्वमात्रसिद्ध्या तादृशक्षेत्रज्ञानामेव कर्तृत्वेन सिद्धिरिति हेतोरर्थान्तरसाधकत्वान्नेश्वरसिद्धिः । न च क्षित्यादिवायुपर्यन्तस्य पक्षीकरणेन तदुपादानगोचरापरोक्षज्ञानादिमत्त्वस्य क्षेत्रज्ञेष्वशक्यवचनतया पक्षधर्मताबलात्तत्सिद्धिः । विवादाध्यासितं क्षित्यादिकं स्वोपादानगोचरापरोक्षज्ञानादिमदनेककर्तृपूर्वकं कार्यत्वात् । विचित्रसन्निवेशसार्वभौमसदनवदिति दृष्टान्तेनानेककर्तृसिद्ध्या पक्षताया दुर्बलत्वात् । महीमहार्णवादीनां कार्याणामनेकत्वात्तेषां सर्वेषामेकदैवैकेन निर्मितत्वे प्रमाणभूतस्य हेतोरभावात् । पृथग्भूतेषु कार्येषु कालभेदकर्तृभेदयोः प्रत्यक्षासिद्धत्वेन प्रत्युतबाधाच्च । नच जीवानां तादृशनिर्माणशक्त्यऽदर्शनेन तन्निवृत्तौ कार्यबलेनैव तत्सिद्धिरिति वाच्यम् । पूर्वमशक्तानामपि पश्चात् पुण्यविशेषोपचयेन शक्तिदर्शनात्पुण्यविशेषोपचयेनातिशयितादृष्टसम्भावनया च तादृशविलक्षणकार्यकर्तृत्वस्यापि संभवात् । एवमेवोक्तं कापिलाचार्यैः । मुक्तात्मनः प्रशंसावाक्यमुपासासिद्धस्य वेति सूत्रे । इदं योगिनोऽप्युपलक्षकम् । किञ्च । युगपत्सर्वोत्पत्तिस्थिती न प्रमाणपदवीं व्रजतः । लोके क्रमेणैव तयोर्दर्शनाद्युगपत्तत्कल्पकस्य हेतोरशक्यवचनत्वात् । क्रमेण तत्कल्पने विरोधाभावाच्च । अतः, क्षित्यादिकं बुद्धिमदेककर्तृकं कार्यत्वाद् घटवदित्यत्र, तन्नैककर्तृकं कार्यत्वात् घटपटस्तम्भादिसमूहवदिति दृष्टान्तेन हेतोः साधारणत्वम् । तथा भूधरादिनिष्ठं कार्यत्वं न बुद्धिमदेक-

कर्तृकत्वसाधकं समूहनिष्ठत्वात् । घटपटस्तम्भादिसमूहनिष्ठकार्यत्ववदित्यनुमानान्तरादपि तथा । किञ्चेदं क्षित्यादिगतं कार्यत्वं युगपदुत्पद्यमानसर्वगतं वा क्रमिकोत्पाद्यमानसर्वगतं वा। आद्ये आश्रयासिद्धत्वम् । द्वितीये तु विरुद्धत्वम् । तस्मान्न कार्यत्वलिङ्गकाऽनुमानेनेश्वरसिद्धिः । नापि जगदेकचेतनाधीनम् । अचेतनारब्धत्वात् । नीरोगस्वशरीरवदित्यनुमानात् सिद्धिः । तथाहि । किमिदमेकचेतनाधीनत्वम् । एकचेतनायत्तोत्पत्तिस्थितिकत्वमिति चेन्न । नीरोगस्यापि शरीरस्य पितृपुत्राद्यनेकचेतनादृष्टजन्यत्वे तदुत्पत्तिस्थित्योस्तदधीनत्वेनैकचेतनाधीनत्वाभावाद् दृष्टान्तसाध्यवैकल्येन हेतुरसाधारणत्वापत्तेः । किञ्च । शरीरस्थितिरपि किं स्वावयवेषु समवेतता उत प्राणनम् । आद्ये अवयवाधीनत्वाद्यचेतनापेक्षा घटादिवत् । द्वितीये क्षित्यादीनां शरीरत्वाभावेन पक्षे असंभव इति पक्षसपक्षानुगतस्थित्यनुपलम्भः । नाप्यनेकचेतनाधीनप्रवृत्तिकत्वम् । पक्षान्तर्भूतेषु गुरुतररथशिलामहीरुहादिष्वनेकचेतनाऽधीनप्रवृत्तिकत्वदर्शनेन व्यभिचारात् । नापि चेतनमात्राधीनत्वम् । सिद्धसाधनत्वादर्थान्तरापत्तेश्च । किञ्च । ईश्वरः कर्त्ता न भवति । प्रयोजनशून्यत्वाद् अशरीरत्वाच्च । मुक्तात्मवदिति बाधकानुमानादपि नेश्वरकर्तृत्वसिद्धिः किञ्चात्यन्तापरिदृष्टेश्वराख्यपुरुषस्य तस्मिन् सामर्थ्यविशेषस्य च कल्पनेऽत्यन्तगौरवात् क्लृप्तानां जीवानामेव तपोयोगयागादिलब्धसामर्थ्यानामेव कर्तृत्वेन कल्पनं लघीय इत्यचेतनारब्धत्वलिङ्गकानुमानेनापि नेश्वरसिद्धिरित्याहुः ॥

यानि तु,कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः * वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्यय इत्युदनाचार्योक्तानुमानानि तानि तु व्याख्यातृभिरेवं व्याख्यातानि । तथाहि । अत्र कार्ये तु प्रसिद्धमेव। आयोजनं तु सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म । धृतिर्धारणं गुरुत्ववतो ब्रह्माण्डादेः पतनाभावः । आदिपदाद्ब्रह्माण्डविनाशः । पदं घटादिसंप्रदायव्यवहारः, घटादिपदप्रयोगो वा । प्रत्ययो वेदजन्यं धर्मादिज्ञानम् । श्रुतिर्वेदः वाक्यं पदसमूहः संख्याविशेषः सर्गादौ परमाणुनिष्ठद्वित्वादिसंख्याजन्यं परिमाणमित्यादि। प्रयोगास्तु–क्षित्यादिकं कर्तृजन्यं,कार्यत्वाद् घटवत्।अन्ये तु जन्यत्वादित्यपि प्रयुञ्जते । तथा क्षितिः । उपादानगोचरापरोक्षज्ञानोपायेच्छा

तादृशकृतिजन्या, ज्ञानेच्छाजन्या, कृतिजन्या वा । जन्यत्वात् । घटादिवदित्यपि । पूर्वोक्तं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वात् । अस्मदादिशरीरजन्यक्रियावत् उक्ता धृतिः चेतनप्रयत्नपूर्विका धृतित्वात् । वियति विहङ्गमधृतिवत् । ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात् पाट्यमानपटवत् । उक्तव्यवहारः स्वतन्त्रप्रयोज्यः, व्यवहारत्वात् । आधुनिकलिप्यादिव्यवहारवत् । पूर्वोक्तं ज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत् । वेदः पौरुषेयो वेदत्वात् । यन्नैवं तन्नैवमाकाशवत् । वेदः पौरुषेयो वाक्यत्वात् । भारतादिवत् द्व्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणककपालद्वयारब्धघटपरिमाणवदिति इदं चैवं व्युत्पादितं मैथिलभवदेवाभिः । अत्र प्रथमे प्रयोगे कर्तृजन्यत्वं तु स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिदृष्टाद्वारकजन्यत्वम् । अत्रादृष्टाद्वारकेति विशेषणाच्च जीवात्मनिरूपितदृष्टाद्वारकजन्यत्वेन सिद्धसाधनमर्थान्तरं वा । जीवस्य साध्यस्याभावेन स्वपदार्थाननुगमात् कथं व्याप्तिग्रह इति वाच्यम् । स्वपदार्थाननुगमस्यादोषत्वात् । अन्यथेच्छादिज्ञानाद्यनुमानं स्यात् । स्वविशेष्यकज्ञानत्वादिनैव तत्र कार्यकारणभावात् । अत्र च सकर्तृकत्वादिसाध्यकानुमाने कर्तृत्वेनैव कारणताज्ञानजन्यादिसाधके च ज्ञानत्वादिना । एवं कार्यतापि कार्यत्वेन जन्यत्वेन च । नच शरीरगौरवेणाप्रयोजकत्वं शङ्क्यम्, अवच्छेदककोटौ घटत्वादीनां प्रवेशे आनन्त्यगौरवात् । ध्वंसस्य जन्यत्वेन तस्य च जन्याभावत्वेनावच्छेदकतया प्रवेशे शरीरगौरवाच्च । एवं तु विवक्षितविवेके जन्याभावत्वैकदेशस्य जन्यत्वस्यैव प्रवेश इति शरीरलाघवात् सामान्यलाघवादेकत्वलाघवात् कल्पनालाघवादुपस्थितिलाघवाच्च जन्यत्वेनैव कार्यता, न घटत्वादिना । कार्यत्वं च स्वसमवायिजन्यताख्येन परम्परासंबन्धेन कृतित्वमेवेति न तत्रापि गौरवम् । नच विशिष्यान्वयव्यतिरेकाभ्यां घटत्वकुलालत्वादिना विशिष्यकार्यकारणभावस्यावश्यकत्वात्, सर्वमेतद्विरुद्धमिति वाच्यम् । कार्यमात्रवृत्तीनां जातीनां कार्यतावच्छेदकत्वमिति सिद्धान्तसमुद्घोषात् । नचाङ्कुरादौ हेतोर्विपक्षगामित्वेनानैकान्तिकत्वं शङ्क्यम् । तत्र साध्यसंदेहस्यानन्याहितत्वेन तस्य पक्षसमत्वात् । नच शरीरजन्यत्वस्योपाधेर्विद्यमानत्वाच्छरीराजन्यत्वस्य प्रतिसा-

धनस्य सत्त्वाच्च साध्यसंदेहस्यान्याहितत्वेनानैकान्तिकत्वं सिद्धमिति शङ्क्यम्। कर्त्रादिजन्यतायामपि गुरुभूतस्य शरीरजन्यत्वस्यानवच्छेदकत्वाल्लघुभूतस्य जन्यत्वमात्रस्यैवावच्छेदकत्वेन तस्य च साधनव्यापकत्वेनानुपाधित्वे हेतोरदुष्टत्वात्। एवञ्च कर्त्रादिजन्यतायामिव शरीरजन्यतायामपि जन्यत्वस्यैवावच्छेदकत्वादीश्वरे नित्यज्ञानादिकमिव नित्यशरीरवत्त्वस्याप्यङ्गीकारेण प्रतिसाधनदोषस्याप्यभावात्। अनुमानं च, क्षित्यादिकं शरीरजन्यं जन्यत्वाद् घटवत्। ईश्वरः शरीरी कर्तृत्वात् कुलालवद् इति। अनुकूलतर्कश्चात्र कर्तृत्वजन्यत्वाभ्यामिव शरीरत्वजन्यत्वाभ्यामपि पूर्वोक्तयुक्तितुल्ययुक्तिकः कार्यकारणभाव एव। श्रुतिश्च, यतो वा इमानि भूतानि जायन्त इत्यादि। सहस्रशीर्षापुरुष इत्यादि। आकाशशरीरं ब्रह्मेत्यादि च। श्रुतीनां चानुकलतर्कविधया स्वतन्त्रतया च ब्रह्मणि प्रामाण्यमिति नवीनमतम्॥ साम्प्रदायिकमते शरीरस्य कुलालाऽऽदिशरीरत्वेनैव कारणत्वं, न तु शरीरत्वेनेतीश्वरस्य नित्यमेव शरीरं लोकानुग्रहेण व्यवहारप्रवर्त्तनार्थम्।

अतोऽस्मदाद्यदृष्टजनिते रामकृष्णादिनामके शरीरे भूतावेशन्यायेनावेशः, कार्यकरणानन्तरं च त्याग इति।अभिनवमते तु महेश्वरस्य विश्वमेव शरीरम्। तच्च नित्यानित्यपुञ्जघटितमित्यनित्यांशविरामेऽपि नित्यांशमादाय नित्यमेव। आकाशात्मकं च नित्यमेव। रामकृष्णादिनामकं त्वाविर्भावतिरोभावशालि भक्तानुग्रहेण कदाचित्कचिदाविर्भवति तिरोभवति च। अत एव तत्त्ववादिभिर्मूर्त्तमपि नित्यं विभु चेत्यङ्गीक्रियते। सर्वत्र सर्वदा तथाभूतभक्तभावनया भक्तैः साक्षात्क्रियमाणत्वात्। तादृशसाक्षात्काराणां प्रमात्वे सम्भवति भ्रमत्वकल्पनस्याऽन्याय्यत्वात्। तदुक्तमौत्सर्गिकधियां प्रमात्वमिति। विश्वात्मकं तु योगिप्रत्यक्षगम्यमपि विश्वरूपदर्शनादिषु श्रूयते एव सहस्रशः। एवं श्रुत्यादिभिः शरीरेऽङ्गीकृते तदनुसारिसकर्तृकत्वानुमानं निर्दुष्टमेव। एवमेकेनेश्वरेण सकलक्षित्यादिकार्यसम्भवे सति प्रमाणाभावाद्गौरवाच्च नानेकेश्वरसिद्धिः। किञ्चानेकेश्वराङ्गीकारे तेषामैकमत्यं वैमत्यं वा स्यात्। तत्राद्ये स्वातन्त्र्याभावादैश्वर्यहानिः। द्वितीये तु कार्यासिद्धिरिति कार्यदर्शनादेकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतिभ्यस्तादृशैः पुराणैश्चैकस्यैव सिद्धिरिति न पूर्वोक्तं किमपि दूषणम्। एव-

मेवेश्वरसिद्धौ कर्मत्वादिलिङ्गकान्यप्यनुमानानि तमेकमेव साधयन्तीति न कोऽपि क्वापि दोष इति। तदपि न विचारचारु। रामानुजाचार्योक्तं सार्वभौमसदनदृष्टान्तस्य महीमहार्णवेत्याद्युक्तदूषणानामनुद्धारेण सिद्धसाधनादिदोषगणां हेतोराभासतायाश्च निवृत्त्यभावात्। एवं शरीरत्वसाधकानुमानेऽपि कापिलोक्तानां रागादिदोषाणामनपगमार्जवितुल्यत्वापत्त्यनुद्धार एव। एवमेव जन्यत्वलिङ्गकज्ञानजन्यत्वादिसाध्यकानुमानेऽपि द्रष्टव्यम्। अत श्रुतिसाहाय्यं विना कथमपि न निर्वाहः। एवं कर्मत्वलिङ्गकानुमानमप्याश्रयासिद्धम्। अतः सद्येतत्क्षुरित्यादिश्रुतिषु तन्मायाफलरूपेणेत्यादिभगवद्वाक्येऽन्यत्र च विभागादेव सृष्टिकथनेन पक्षतावच्छेदकस्य पक्षे अभावात्। एवं धृतिपक्षकानुमानेऽपि धृतंब्रह्माण्डादिपतनात्यन्ताभावरूपत्वं वा तत्प्रागभावरूपत्वं वा वक्तव्यम्। तयोरुभयोरप्यनादित्वेन चेतनप्रयत्नपूर्वकत्वस्याभावाद्बाधितत्वम्। अतो धृतिशब्दार्थो विष्टम्भात्मकः संयोगविशेषो वक्तव्यः। तदपि चेतनप्रयत्नपूर्वकत्वे साध्ये तादृशानेकजीवप्रयत्नेन सिद्धसाधनमर्थान्तरं वा। एकचेतनप्रयत्नपूर्वकत्वे साध्ये तु गुरुतररथशिलादिदृष्टान्तेन हेतोः साधारणत्वं दुरपोहम्। एवं ब्रह्माण्डादिपक्षकानुमानेऽपि सिद्धसाधनादिकः। एकप्रयत्नवद्विनाश्यत्वसाधने तु खन्यमानमहाभवनदृष्टान्तेन हेतोः साधारणत्वं बोद्धव्यम्। एवं व्यवहारपक्षकेऽनुमानेऽपि लिप्यादिव्यवहारसांकेतिकप्रयोगदृष्टान्तेनोक्तदोषादिकं द्रष्टव्यम्। तथा धर्मादिज्ञानपक्षकानुमानेऽपि वेदापौरुषेयवादिनं प्रति सिद्धसाधनादिदोषदुष्टत्वम्। एवं वेदत्वलिङ्गकानुमाने हेतोः साधारणत्वम्। तथा वाक्यत्वलिङ्गकानुमानेऽप्याकाशवाणीदृष्टान्तेन हेतोः साधारणत्वम्। एवं द्व्यणुकपूर्यमाणपक्षकानुमानेऽपि तादृशसंख्याज्ञानस्य योगिनामपि सम्भवात्तैरर्थान्तरमिति सर्वाण्येवाभासरूपाणि। एवं नवीनमते यदीश्वरस्य शरीरमङ्गीकृतं तदपि युक्तिमूलत्वे रागादिमत्त्वप्रयोजनवत्त्वाद्यापत्त्यपरिहारादु दुष्टमेव। श्रुतिमूलकत्वे तु श्रुतिषु सच्चिदानन्दात्मकतदभिन्नशरीराङ्गीकारात्कर्तृत्वस्यापि तत्रोक्तत्वात्तासां श्रुतित्वेनैव प्रामाण्यं, न तदनुगामित्वेनेति। यदप्यभिनवमते ईश्वरस्य विश्वात्मकं शरीरमङ्गीकृतं तच्च नित्यानित्यपुञ्जघटितत्वेऽपि नित्यांशमादाय नित्यमाकाशादिरूपं च नित्यमेवेत्युक्तम्। तदपि फल्गु

कर्तृत्वनिर्वाहकत्वेनाङ्गीक्रियमाणस्य विश्वपूर्वभावित्वस्यावश्यकत्वेन विश्वात्मकत्वानुपपत्तेः । नित्यांशमादाय तस्य पूर्वभावित्वाङ्गीकारे तस्य परमाण्वादिरूपत्वेन कर्तृतानिर्वाहकत्वविरहप्रसङ्गात् । नच नित्यानित्यपुञ्जात्मकमेव तदित्यपि युक्तम् । यस्य पृथिवी शरीरमित्यादिश्रुतिगतप्रत्येकपर्याप्तिकत्वविरोधप्रसङ्गात् । सर्वतःपाणिपादं तदित्यादिश्रुतिविरोधापत्तेश्च । प्रकृतमनुसरामः । अतो, नैयायिकमतानुसरणं बौद्धादिदूषकत्वेन शिष्टादरमात्रादित्यर्थः । शास्त्रयोनित्वसूत्रानुसारेणाहुः ॥ अस्माकमित्यादि ॥ अस्माकं व्यासानुसारिणाम् ॥ प्रतिसत्कर्णमिति ॥ संश्चासौ कर्णश्च सत्कर्णः सत्कर्णं सत्कर्णं लक्ष्यीकृत्येति प्रतिसत्कर्णम् ॥ भेरीघोषोद्घुष्टतयेति ॥ भेर्यो महादुन्दुभयः । ताड्यमानासु भेरीष्विति भारते प्रयोगात् । भेरीणां घोषेणोद्घुष्टो भेरीघोषोद्घुष्टस्तस्य भावस्तत्ता तया । एतस्य सिद्ध इत्यनेनान्वयः ॥

एवं नैयायिकमते निराकृते धर्माणां भेदाभेदं साधयितुं प्रवृत्तो मायावादी आगन्तुकवादी वा शङ्कते ।

स्यादेतत्, ब्रह्मधर्माः किं ब्रह्मणः सकाशाद् भिन्ना अभिन्ना वा । न तावदाद्यः । तेषामपि नित्यत्वेनाङ्गीकाराद् । एकमेवाद्वितीयम्, असङ्गो ह्ययं पुरुष इति श्रुतिविरोधात् । न द्वितीयः । धर्मत्वव्याहतेः । तथाचैकविज्ञानेन सर्वविज्ञानोपपत्त्यर्थं प्रपञ्चवद् ब्रह्मकार्या एव धर्मा इति मन्तव्यम् । तथा सति ब्रह्म सर्वकल्पनारहितमेव सेत्स्यतीति चेदत्रोच्यते । यथा सूर्यस्य तेजोरूपस्य प्रकाशोऽपि तद्रूप एव तद्धर्मरूपः । तेजस्त्वेनैव मूलाविच्छेदेन प्रतीयमानत्वात्तद्रूपः । तस्माद्भिन्नत्वेन तदीयत्वेनापि प्रतीयमानत्वात् तद्धर्मरूपोऽपि । तस्मात् प्रतीत्यनुरोधेन तादृशमेव तद्वस्तूत्पत्तिशिष्टमपीत्यङ्गीक्रियते । तथा ब्रह्मधर्मा अप्यभेदबोधकश्रुत्यनुरोधेन तद्रूपा एव परास्य शक्तिरित्यादिषु षष्ठ्या भेदेनापि प्रतिपादनात् तद्भिन्ना अपि । तथाचोभयविधश्रुतिबलेनैव तादृशमेवैतद्वस्त्विति मन्तव्यम् । अलौकिकानुवादपूर्वकनिषेधपक्षस्य पूर्वमेवापास्तत्वात् ।

नच सूर्यजन्यमेव तेजोऽन्तरं प्रकाश इति वाच्यम् । यदादित्यगतं तेज इति वाक्याद्भगवत्तेजस्त्वेनाजन्यत्वाद्भेदकल्पनायां प्रमाणाभावाद् गौरवाच्च । प्रलये सूर्यनाशेऽपि तेजसो भगवद्धर्मत्वेन पुनर्भगवत्येव स्थितिः । तेजःसहितस्य तस्यैव वा भगवति लयः । सूत्रकारोऽपि धर्मस्वरूपनिरूपण आहैवमेव । प्रकाशाश्रयवद्वा तेजस्त्वादिति । वाशब्दः पूर्वपक्षनिरासे । प्रकाशस्तदाश्रयश्च सूर्यादिस्तयोर्यथा भेदस्तद्वद्धर्मब्रह्मणोरपीत्यर्थः । प्रकाशस्य स्वाश्रयतेजोभिन्नत्वशङ्काव्युदासाय हेतु । तथा सति स्वाश्रयाऽभिन्नतेजस्त्वादित्यर्थो भवति । अथवा तेजोऽतिरिक्ते वस्तुनि नैवं दृश्यत इत्यत आह हेतुम् । ब्रह्मण्येव तेजःशब्दवाच्यत्वादिति । यदादित्यगतमिति वाक्ये तेजसः स्वधर्मत्वेन निरूपणाद् ब्रह्मापि तेजोरूपमिति भावः । तस्मात् तादृशधर्मविशिष्टमेव तद्वस्तु श्रुत्यैकमेवेति प्रतिपाद्यते । तथाचैवकारेण भगवद्धर्मातिरिक्तमेव वस्तु व्यवच्छिद्यते, न तु तेऽपि । तेषां स्वरूपान्तःपातित्वात् । न हि मध्यंदिने नभोमण्डले सूर्य एवास्तीति वाक्ये तत्प्रभासत्तापि निषिध्यते । अत एव द्वितीयस्कन्धे ब्रह्मस्वरूपनिरूपणे राज्ञा पृष्टः श्रीशुकस्तन्निरूपयन्नित्याह, न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिता इत्युपक्रम्य, युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन् रममाणमीश्वरम् । तथाच भगवद्धर्मा भगवत्येव नित्या एव । येषु च भगवान् स्वैश्वर्यादिधर्मान् ददाति, तेषु यावत्कालं भगवदिच्छा तावदेव तिष्ठन्तीति फलितं दशमस्कन्धे चाक्रूरदृष्टस्वरूपेण, श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया * विद्ययाऽविद्यया शक्त्या मायया च निषेवितमिति वाक्यैकवाक्यतायाम् । मूर्तिमद्भिरुपासिताः, सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तय इति वाक्यैकवाक्यतायां च सर्वेषां धर्माणां स-

च्चिदानन्दरूपत्वं सिद्ध्यति । लीलाया अप्येवंरूपत्वादेव नित्यता मन्तव्या ॥

ननु गिरिकाननयमुनापुलिनपशुपक्षिमनुजादिसंबन्धिनी हि लीला । सा च तेषामनित्यत्वे कथं नित्या भवेत् । ननु !! साध्वी ते वाणी यत्तन्नित्यताशुश्रूषामपि तत्राभिव्यनक्ति । तन्नित्यता च प्रमाणादेवावसीयते । तथाहि । जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥ स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्द्धयन् कामदेवमिति वाक्ये भिन्नकालानामपि द्वारकागोकुलमथुराधिकरणकलीलानां कर्तुर्भगवत उत्कर्षेण स्थितेः स्वकथनसमयेऽपि वर्तमानत्वं जयतीति वर्तमानप्रयोगेण निरूपयन्नेव श्रीशुकस्तत्र तत्र लीलानामपि तथात्वं बोधयितुमेककालीनत्ववाचकशतृप्रत्ययान्तपदे प्रयुक्तवान् अस्यन्निति, वर्द्धयन्निति च । तथाच कथनसमयेऽतीतत्वेन प्रतीतानामपि लीलानां तदा वर्तमानत्वं प्रतीयते । तच्च नित्यतायामेव घटते, नान्यथा । किंच कर्तुरेवेदानीं सत्त्वं चेदभिमतं स्यान्न लीलानामपि, तदा ता न निरूपयेदेव । परिचायकत्वेन तन्निरूपणे वा तत्कर्ता जयतीत्येव वदेत् । एवञ्च सति गत्यन्तरसद्भावेऽपि यच्छत्रन्तस्यैव निरूपणं तेन लीलानामेव वर्तमानत्वं मुख्यतयाऽभिमेतमित्यध्यवसीयते । नच विशेषणत्वेनामुख्यमिति वाच्यम् । दण्डी प्रैषानन्वाहेत्यत्र, लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र च यथा प्रैषानुवादस्य तत्प्रचारस्य पूर्वसिद्धत्वेन न विधानम् । किन्तु विशेषणस्यैव दण्डित्वस्य लोहितोष्णीषत्वस्य च । अपूर्वत्वात् । तथा भगवतो वर्तमानत्वे संदेहाभावात् तत्तल्लीलाकरणस्यैव वर्तमानत्वस्यात्रापि निरूपणात् । यद्यपि, वर्तमानसामीप्ये वर्तमानवद्वेत्यनुशासनाद्वर्तमानसामीप्यादेवात्राप्येवं प्रयो-

तत्त्वदीपनम् । पञ्चपादिकाविवरणस्य व्याख्यानम् ) खं० ८ ८ ०
वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ ३ ०
टुप्टीका खण्डानि ४ ४ ०
पातञ्जलदर्शनम् श्रीरामानन्दयतिकृतमणिप्रभाऽख्यवृत्ति स० १ ०
व्याकरण मिताक्षरा । श्रीमदन्नभट्टप्रणीता खण्डानि १० १० ०
रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ ३ ०
भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रम पराक्रमसहितः खण्डे २ २ ०
बोधसारोनरहरिकृतः तच्छिष्यदिवाकरकृतटीकयास०ख० १० ०
ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्विरचिता खण्डे २ २ ०
दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डानि ३ ३ ०
श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् ।
गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य व्याख्या समेतम् खण्डानि १५ १५ ०
तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा–तत्त्वत्रयचुलुक संग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । १ ०
श्रीभाष्यवार्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्रतिपादनपरम् । यतीन्द्रमतदीपिका च । श्रीगोविन्दाचार्यसूनुश्रीनिवासाचार्यकृता । सकलाचार्यमतसंग्रहश्च । खण्डे २ २ ०
गूढार्थदीपिका । श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्या खण्डे २ २ ०
आश्वलायनसूत्रप्रयोगदीपिका । श्रीविश्वेश्वरमंचनाचार्यभट्टविरचिता खण्डे २ । २ ०
काव्यालंकारसूत्राणि । पण्डितवरवामनविरचितवृत्तिसमेतानि कामधेनुसमाख्यव्याख्यासहितानि खण्डे २ । २ ०
श्रुत्यन्तसुरद्रुमः । श्रीपुरुषोत्तमप्रसादविरचितः खण्डानि ३ ३ ०
चतुर्विंशतिमतसंग्रहः । श्रीभट्टोजिदीक्षितसंकलितः खण्डे २ २ ०
श्रीविद्वन्मण्डनम् श्रीविठ्ठलनाथदीक्षित विरचितम् । गोस्वामि श्रीपुरुषोत्तमजीमहाराजविरचित सुवर्णसूत्राख्यव्याख्यासहितम् २ ०

व्रजभूषण दास और कम्पनी
बनारससंस्कृत सीरीज़्कार्यालय
बनारस सिटी ।

अनवद्यम् । तथाच क्षपाणां तदा प्रदर्शनं तन्नित्यत्व एव घटते । अग्निपरमणलीलाया अपि नित्यत्वे कथमेतद्व्रतफलत्वेन वरदानमुपपद्यत इति शङ्काप्येतेनैव निरस्ता वेदितव्या । भगवतः सर्वरसरूपत्वेनैव सर्वोपपत्तिरित्युक्तत्वात् । इयमेवोपपत्तिः, श्रीनन्दयशोदयोस्तादृशलीलानन्दानुभवे का हेतुरिति–नन्दः किमकरोद् ब्रह्मन् श्रेय एवं महोदयम् * यशोदा च महाभागा पपौ यस्यास्तनं हरिरित्यादिना राज्ञा प्रश्ने कृते, 'द्रोणो वसूनां प्रवरो धरया सह भार्यया * करिष्यमाण आदेशं ब्रह्मणस्तमुवाच ह । जातयोनौं महादेवे भुवि विश्वेश्वरे हरौ । भक्तिः स्यात् परमा लोके ययाऽञ्जो दुर्गतिं तरेत् ॥ अस्त्वित्युक्तः स एवेह व्रजे द्रोणो महायशाः । जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत् । ततो भक्तिर्भगवति पुत्रीभूते जनार्दने । दम्पत्योर्नितरामासीद् गोपगोपीषु भारत' इत्यादिना श्रीशुकेनोत्तरितेऽपि ज्ञेया । एवमेव श्रीदेवकीवसुदेवयोरन्येष्वप्येतादृशेष्वित्यलं विस्तरेण ॥

इति श्रुतिशतैरतिस्फुटतरैरपास्तभ्रमै-
र्विचारभरचातुरीसचिवसत्पुराणैरपि ।
स्फुरद्विहृतिनित्यता सुनिरणायि गोपीपते-
र्मयाऽतिनिजयत्नतः फलतु तेन सैवेह मे ॥

नन्वधुनेत्यादि ॥ अन्यथेति ॥ प्रकटितप्रकटनीयलीलयोरन्योन्यभक्तसम्बन्धित्वे चकारादनुभवविरोधोऽपि संगृह्यते इति अबाधितेन भविष्यत्त्वानुभवेन बाधितत्वात् । ईदृश्यामाशङ्कायां तादृशाऽनुभवलीलानित्यत्वयो रसस्वरूपविचारेण समर्थयन्ति ॥ अत्रेदमित्यादि ॥ निर्विवादमिति ॥ स मानसीन आत्मा जनानामिति श्रुत्यन्तरात्, को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादित्युपसंहारे आनन्दरूपताश्रवणाच्च ।
रसो वै स इतिश्रुतावपि विभावादिभिरुत्कृष्यमाणानन्दात्मकरसत्वं

तद्भेदवैशिष्ट्यं चाऽवश्यमङ्गीकार्यमतो विवादराहितम् । तावता कथमनुपपत्तिपरिहार इत्यत आहुः ॥ तथाचेत्यादि ॥ रसपोषायेति ॥ एवं सर्वभेदविशिष्टरसात्मकत्वे भविष्यदागमनविषयकवाक्यजनितो थ इदानीन्तनार्तिरूपो रसस्तत्पोषाय ॥ पूर्वोक्तभक्तेति ॥ एष्यामीति वाचाऽऽश्वासितेत्यर्थ ॥ तस्येति॥भविष्यत्त्वोक्त्यवधित्यागतद्द्वयागैरभिव्यङ्ग्यस्य॥ तादृशरूपत्वादिति ॥ तेनैव प्रकारानुभवयोग्यस्वरूपकत्वात् ॥ फलितमिति ॥ रसो वै स इत्यादिश्रुतिद्वयविचारे निष्कृष्यमाणे सिद्धम् । अन्यथा, सर्वरस इत्यत्र सर्वपदव्याकोपापत्तेः । प्रायपाठेन सर्वपदस्य नानारूपतायामेव पर्यवसानादिति ॥ सर्वमप्येवमिति॥भविष्यत्त्वस्यापि स्वरूपान्तःपातित्वेन नित्यत्वाविरोधाद्भगवदिच्छया भविष्यत्त्वानुभवस्यापिनित्यत्त्वाबाधकत्वेनानित्यत्वरूपदोषरहितमित्यर्थः । सिद्धमाहुः ॥ तथाचेत्यादि॥ नन्वग्निमरमणस्य नित्यत्वे एतद्व्रतफलत्वेन वरदानं कथमुपपद्यते इतिचेत्तत्राहुः ॥ अग्निमेत्यादि ॥ एतेनेति॥ भविष्यत्त्वनित्यत्वयोरविरोधेन । अविरोधे बीजमाहुः॥ भगवत इत्यादि ॥तथाच स्वरूपविचारेणैव विरोधपरिहार इत्यर्थः। एतामेवोपपत्तिं लीलान्तरेऽप्यतिदिशन्ति ॥ इयमित्यादि, विस्तरेणेत्यन्तम् ॥ उपपत्तिरिति॥ नित्यत्वभविष्यत्त्वादीनां स्वरूपान्तःपातित्वेन अविरोधरूपा सेत्यर्थः ॥ इतीति ॥ इत्याशयेन । एवं द्वाविंशतीनां दोषाणां पुनः शङ्कानुदयविभावनेन लीलानित्यतावादं समाप्य तस्या आशास्यत्वमाहुः ॥ इतीत्यादि ॥

ननु लीलानित्यत्वे तदन्तःपातिनां तदनुभवोऽस्तु, तेषामपि स्वरूपान्तःपातित्वात् । न त्वाधुनिकानां, तदन्तःपातित्वेनानित्यत्वात् । तथा सति तस्याः कथमाशास्यत्वमित्याशङ्कायां विचारान्तरमारभते ।

अथेदं विचार्यते । जन्मान्तरसहस्रेषु तपोध्यानेति वाक्यादनेकजन्मसंचितसुकृतराशेरतिशयितभगवदनुग्रहभाजनस्य महत्तमचरणरजोऽभिषिक्तस्य कस्य चित् पुरुषविशेषस्य पूर्वोक्तन्यायेन नित्यलीलामध्यपातिभक्तभावसजातीयभावोत्पत्तौ तद्भावानुसारेणैव तदभिलाषेण भजने क्रियमाणे तल्लीलामध्यपातित्वमस्य भवति, नवेति ? किमत्र युक्तम् । नेति । कुतः ? यत एव तस्यापि

तादृशलीलारसानुभवकामनया भगवद्भजनस्य कृतत्वेनैतस्मिन्नपि तादृशीं लीलां हरिः करिष्यतीति भवता वाच्यम् । तथाचैतस्मिन् क्रियमाणाया लीलाया जन्यत्वेन न नित्यत्वं वक्तुं शक्यम् । तेनैतदर्थमेव क्वचित्प्रकटीभूयास्मै तादृक्सुखं दत्वा स्वस्मिन्नेव प्रवेशयति तमिति, न नित्यलीलायां तस्य प्रवेश इति चेदत्र ब्रूमः । यथा गौतमीयानां मते सर्वज्ञत्वेनेश्वरस्य सर्वविषयकज्ञानस्यावश्यं वाच्यत्वेन विषयाणां जन्यत्वेऽपि, न तद्विषयकतज्ज्ञानस्य जन्यत्वम् । धर्मिग्राहकप्रमाणेन नित्यत्वेनैव च सिद्धेः । तथा पूर्वोक्तप्रमाणैर्लीलाया अपि नित्यत्वेनैव सिद्धायास्तस्या एव तादृग्भक्तविषयत्वमात्रस्यैवाऽत्र वाच्यत्वात् तद्विषयिकायास्तस्या अजन्यत्वात् त्वदुक्त्वासिद्धिः । नच तादृग्भक्तस्यैतद्विषयत्वे मानाभाव इति वाच्यम् । तस्य पूर्वमेवोक्तत्वात् । तथापि बृहद्वामनीयकथासंदर्भे स्वस्तुतिसन्तुष्टभगवत्प्रदर्शितस्वरूपावलोकनसञ्जातमनोरथे श्रुतिभिः, कन्दर्पकोटिलावण्येत्यादिना निरूपिते, दुर्लभो दुर्घटश्चैवेत्यादिना भगवद्वरदानं निरूप्य पश्चाद् ब्रह्मवाक्यं निरूप्यते— उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गता इति । एतदग्रे च पठ्यते । स्त्रियो वा पुरुषा वापि भक्तिभावेन केशवम् * हृदि कृत्वा हरिं यान्ति श्रुतीनां नात्र संशय इति । यद्यपि नगरादपि बहिःस्थितस्यात्यधमस्य कस्यचिन्महाराजान्तःपुरप्रवेशकामनायामपि न तत्र प्रवेशः सम्भवति, प्रत्युत दण्डार्हस्तदिच्छाज्ञानेऽपि तथा तादृशस्यैव जीवस्य पूर्वोक्तकामनायामपि न तत्र प्रवेशः सम्भवति । प्रत्युतायोग्यमिच्छन् पुरुषः पतत्येव न संशय इति वाक्यात् पात एव भवेदत एव भगवता श्रुतिष्वपि दुर्घट इत्युक्तम् । तथापि, मयानुमोदितः सम्यक् सत्यो भवितुमर्हतीत्युक्त्वा तथा भगवदङ्गीकारत एव तथा भवतीति ज्ञायते । सर्वात्मभावेन

चेत् तथा भजनं करोति तदा भगवानप्यङ्गीकरोत्येव । अन्यथा, ये यथा मां प्रपद्यन्ते इति मर्यादा न स्यात् । अथवा पूर्वोक्तभक्त-सम्बन्धिन्या अपि तस्या इति नानुपपत्तिः काचित् । अत एव ऋग्वेदेऽपि पठ्यते । विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् * ध्रुवासोऽस्य कीरयो जनास उरुक्षितिं सुजनिमा चकारेति । एष विष्णुः क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् असुरेभ्योऽपहृत्य प्रदास्यन् एतां सर्वां पृथिवीं विचक्रमे । अत्र हि विष्णुमाहात्म्यमुच्यते । तत्र, न हीदमेव महत्तमस्य माहात्म्यं, किन्त्वतोऽधिकमप्यस्तीत्याशयेनाह । ध्रुवास इति । अस्य कीरयः स्तोतारो, जनासो भक्ताः, ध्रुवासो नित्या एवेत्यर्थः । नित्यत्वं तु स्तोत्रेण संतुष्टेन भगवता पूर्वोक्तलीलामध्ये तेषां पातेनेति ज्ञेयम् । अन्यथा जीवस्य स्वत एव नित्यत्वेन, अस्य कीरयो ध्रुवास इत्यनर्थकं भवेत् । नापि सर्वसम्पन्त्या यावदाद्यर्थकगमनाभावरूपं कादाचित्कं ध्रुवत्वमत्र वाच्यम् । सङ्कोचे मानाभावात् । तादृशे ध्रुवपदाशक्तेश्च । तस्मादस्मदुक्त एव श्रुतेस्तात्पर्यं वेदितव्यम् । सुजनिमा शोभनानि जनिमानि कीर्तनस्मरणादीनि यस्य एतादृशो विष्णुः, उरुक्षितिं विस्तीर्णनिवासां चकारेत्यर्थः ॥ किञ्च, अनित्यत्वं लीलासु वदन् वादी प्रष्टव्यः । ध्वंसप्रतियोगित्वं ह्यनित्यत्वं, तदत्र कुतस्त्वयाऽवधारितमिति । जन्यभावत्वेनेति चेद् ब्रूयात् तदा स वक्तव्यः । पूर्वसिद्धाया एव तस्याः क्रमेणाविर्भाव एवेति पूर्वमेवोक्तां स्वरूपासिद्धिं किं नानुसन्धत्स इति । न पश्यामीति चेद् ब्रवीषि, तदा स्वाभिमतश्वरेऽपि तथा ब्रूहि । धर्मिग्राहकप्रमाणेन स तथैव सिद्ध इति तु तुल्यम् । ननु न तुल्यम्, अत्र धर्मिग्राहकमानेनापि प्रातःकालीनलीलायाः सायङ्काले बाल्यस्य च पौगण्डादिष्वनिरूपणात् ।

सत्यम् । तत्र ह्युत्तरकाले पूर्वलीलासत्त्वासत्त्वौदासीन्येन लीलानिरूपणं क्रियते, न तु पूर्वलीलायाः सत्त्वमसत्त्वं वा निरूप्यते । एवञ्च सति सन्देहे तन्निवारणपूर्वकं, जयति जननिवासः, बहूनि सन्ति नामानि, बृहद्वामनीयकथा, ता वां वास्तूनि, ते ते धामानि, तद्विष्णोः परमं पदम्, तद्विप्रासः, ध्रुवासोऽस्येत्यादिश्रुतिस्मृतिभिरुक्तरीत्या लीलाया नित्यत्वेऽवधारिते सर्वसमाधानार्थं क्रमेणाविर्भावितायां एव लीलायाः क्रमेण तत्र निरूपणमात्रमिति तत्रापि निर्णयात् कथं न तुल्यत्वम् । न हि प्रतिपदं नित्यत्वं निरूपणीयम् । एकत्र तथा निर्णयस्यैवान्यत्राप्यवगन्तुं शक्यत्वात् । एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथेति न्यायात् । अनन्यलभ्यस्य शास्त्रार्थत्वात् ॥

अथेत्यादि ॥ पूर्वपक्षमाहुः ॥ नेत्यादि ॥ समादधते ॥ अत्रेत्यादि ॥ त्वखेत्वासिद्धिरिति ॥ जन्यत्वरूपहेत्वसिद्धिरित्यर्थः ॥ तथाहीत्यादि ॥ अत्रायमर्थः । यद्यपि बृहद्वामनीयपुराणीयसन्दर्भे, पृथिव्यां भारते क्षेत्र इत्यनेनोक्तं स्थानं केवलाक्षरमध्यपातिनित्यलीलास्थानात् स्थानान्तरमिव प्रतीयते । तथा सति तत्रत्या लीला भिन्नैवेति भ्रमो भवति तथापि, ता वां वास्तूनीत्यादौ, अत्राह तदिति श्रावणाद्दहरविद्यायां, नास्य जरयैतज्जीर्यतीत्यादिना पुरजरादावपि वेश्मजरादेर्निराकरणाद् बृहद्वामनपुराणेऽपि, व्यापिवैकुण्ठसंज्ञित इत्यनेन वैकुण्ठस्य व्यापिविशेषितत्वाच्च पृथिव्यां दृश्यमानस्य तस्य तद्भिन्नत्वं तदूवृत्तिलाभस्थानत्वं वा वाच्यम् । तथा सति तस्यैवात्रापिसत्त्वाच्छ्रुतिसम्बन्धिन्यपि लीला तल्लोकस्थैवेति नित्यैव । अतो नैयायिकप्रतिपन्नेश्वरज्ञानवद्विषयानित्यत्वेऽपि लीलानित्यत्वं सूपपन्नम् । नन्वस्तु श्रुतिसम्बन्धिन्या लीलायास्तथात्वं श्रुतिपुराणसिद्धत्वात्, न त्वाधुनिकभक्तसम्बन्धिन्या अपि । तदनुक्तत्वात् । तथा सति कथं तस्या आशास्यत्वमित्याशङ्कायामाहुः ॥ एतदग्रह इत्यादि ॥ भवतीति ॥ आधुनिकभक्तस्यापि भवति । तथाचाशास्यत्वे काऽपि नानुपपत्तिरित्यर्थः । नन्वङ्गीकारेणानुमोदने मनोरथस्य सिद्धिरित्यङ्गीकारश्च

श्रुतीनामिव साधनविशेषवशात् । तथाच तादृशसाधनाभावेन तद्ऽभावात्तद्सिद्धिरित्यर्थकमेवाशासनमित्याकाङ्क्षायामाहुः ॥ सर्वेत्यादि ॥ तथाच तादृशभजनमेवाङ्गीकारगमकमिति तादृशाशासनमनर्थकमित्यर्थः । ननु भवत्वेवं जाड्यपरिहारो गौतमीयानां, न तु मायावादिप्रभृतिभिस्तथाङ्गीकार्यम् । तत्तन्त्रे पूर्वोक्तयुक्त्यप्रसिद्धेरित्याशङ्कायां प्रकारान्तरमाहुः ॥ अथवेत्यादि ॥ तथाच भगवदिच्छायाः कारणता तु सर्वैरेव सर्वत्राङ्गीकार्या । तथाच तथैव समाप्तिरित्यर्थः । एवञ्च यथा स्वाश्रयमोक्षवादिनां तेषां मते शबरकुलसंवर्द्धितराजकुमारवद्विस्मृतकण्ठमणिस्मरणवद् वा पूर्वसिद्धस्यैव स्वरूपस्य ज्ञानप्रतिबन्धनिवृत्तिमात्रेण प्रागुपचारस्तथा प्रकृतेऽपि साधनैः प्रतिबन्धनिवृत्तौ लीलानुभव आधुनिकभक्तस्यापि तात्कालिकस्वसम्बन्धित्वोपचार इति तदीययुक्त्या तेषामपि जाड्यपरिहार इति भावः । ननु पूर्वमाविर्भावतिरोभाववादे सर्वस्य सार्वकालिकी सत्ता प्रतिपादितेति तद्रीत्या लीलायां तत्सम्बन्धिनां नित्यत्वमनुक्तसिद्धमेवेति पुनस्तत्साधनस्य किं प्रयोजनमिति शङ्कानिवृत्त्यर्थं श्रुतिमाहुः ॥ अत एवेत्यादि ॥ अत एवेति ॥ एतन्नित्यत्वस्य तद्विलक्षणत्वं हृदिकृत्वैव ॥ विचक्रम इति ॥ त्रिभिः क्रमैराक्रान्तवान् । एतावता कथं प्रकृतसिद्धिरित्याकाङ्क्षायामाहुः ॥ अत्र हीत्यादि ॥ नित्यत्वं त्वित्यादेरयमर्थः । यथा, पुरोडाशं चतुर्धा करोतीत्यनेनोक्तस्य चतुर्द्धाकारस्याग्नेयं चतुर्धा करोतीति वाक्येनाग्नेये उपसंहारस्तथा, नित्यो नित्यानामित्यादिनोक्तस्य जीवनित्यत्वस्य भगवत्स्तोतृषु उपसंहार इति न वक्तुं शक्यम् । पूर्वोपन्यस्तश्रुतिस्मृतिन्यायव्याकोपात् । एवं सति यदत्र ध्रुवत्वश्रावणं तत्र कश्चिद्विशेषो वक्तव्यस्तस्य चोक्तरूप एव युक्तः । अन्यथा निष्प्रमाणकस्य वृत्तिसङ्कोचस्य लक्षणायाश्चापातादिति । तथाच श्रुत्युक्तभगवत्स्तोतृनित्यत्वार्थापेक्षा लीलातत्सम्बन्धिनां या सत्ता सा पूर्वोक्ताया विलक्षणस्वरूपधर्मयाथातथ्यघटितत्वात्, तस्यास्तु तदन्यथाभावघटितत्वादिति । स्वयसे जनिम चारु चित्रमित्यादौ जनिशब्दस्य जन्मनि प्रसिद्धत्वात्तद्व्यावृत्त्यर्थमर्थान्तरमाहुः ॥ नामानुकीर्त्तनेत्यादि ॥ जनी प्रादुर्भावे जायन्त इति जनिमानीति व्युत्पत्त्या तानि तथेत्येतादृश इत्यर्थः । इदञ्च लीलानित्यत्वं, तद्भूतस्य तु नातद्भाव इत्याधिकरणे प्रपञ्चि-

तम् । एवं शब्दप्रमाणेन लीलानित्यत्वे स्थापितेऽपि शङ्कायमानी जन्यभावत्वेन नश्वरत्वेन व्याप्तिं हृदिकृत्य, अनित्या, जन्यत्वात्, जन्या, क्रमिकत्वादिति क्रमिकत्वबोधकप्रत्यक्षशब्दानुगृहीतेनानुमानेन प्रत्यवतिष्ठत इति तं प्रत्याहुः ॥ किञ्चेत्यादि ॥ तथाच जन्यत्वनश्वरत्वयोर्व्याप्तौ सत्यामपि प्रकृते शब्दस्य तात्पर्यान्तरेण तदनुग्राहकत्वात्, प्रत्यक्षस्य च तत्त्वास्पर्शित्वेन दुर्बलत्वात् स्वरूपासिद्धेनानुमानेन तत्स्वरूपासिद्धेरित्यर्थः । अत्राह ' न पश्यामीति ॥ असतः सत्तामनङ्गीकुर्वता सिद्धान्तिनापि प्रपञ्चसत्यत्वाय कारणाद्बहिर्भावः कारणे लय इत्येवंरूपयोरुत्पत्तिनाशयोरङ्गीकारात्तन्न्यायस्यात्रापि शक्यत्वनत्वाच्च पश्यामीत्यर्थः । तत्र प्रत्याहुः ॥ तदेत्यादि ॥ तथा ब्रूहीति ॥ त्वं हि कार्यलिङ्गकानुमानात्कर्तृत्वेनेश्वरं साधयसि । तथा सति कर्तृत्वस्योत्पत्तिविनाशशालित्वव्याप्तत्वात्तत्रापि सिद्धान्त्यभिमतं पूर्वपक्षाभिमतं चानित्यत्वं निराबाधमतस्तदपि ब्रूहीत्युपालम्भः । ननु धर्मिग्राहकप्रमाणेनेश्वरो नित्य एव सिद्ध इति तत्र तथा कथनमनुचितं, नात्रेति चेत्तत्राहुः ॥ धर्मीत्यादि ॥ धर्मिग्राहकं प्रमाणं सर्गाद्यकालीनपरमाणुद्वयसंयोगजनकस्य कर्मणो जन्यत्वसाधकानुमानं, नवानुमानानि वा । प्रकृते तु लीलातत्सम्बन्धिसाधिकाः श्रुतयः श्रुतार्थापत्तयश्च बोध्याः । तथाच परिहारसाम्यादत्रापि तदुचितमित्यर्थः । तौल्यं परिहरति ॥ नन्वित्यादि ॥ अत्र लीलाया नित्यत्वग्राहके पूर्वोक्तप्रमाणे सत्यपि तस्मिन् प्रातरित्याद्युक्तप्रकारेण निरूपणादनित्यत्वस्यैव सिद्धेरित्यर्थः । अत्र समादधते ॥ सत्यामिति ॥ सर्वसमाधानार्थमिति ॥ लीलानित्यत्वेन तद्रसस्वभावतन्मनोरथादिसाम्यं स्यादित्यर्थः । ननु नित्यत्वस्य कण्ठतोऽनुक्तेर्न तुल्यत्वमत आहुः ॥ न हीत्यादि ॥ अनन्यलभ्यस्येत्यादि ॥ शब्देन निर्णीतस्य नित्यत्वस्य शब्देतरालभ्यत्वेन तस्य शब्दार्थत्वादित्यर्थः । एवं शब्दस्य मानान्तरविरोधकृतं दौर्बल्यं निरस्तम् ॥

अतः परं कर्मस्वरूपमर्यादाभङ्गदोषविधूननाय पूर्वोत्तरपक्षावाहुः ।

ननु लीलायाः कर्मरूपत्वेन तस्य च त्रिक्षणावस्थायित्वनियमेन न नित्यत्वं वक्तुं शक्यमितिचेद्, हन्तैवं ज्ञानस्यापि त्रिक्षणावस्थायित्वनियमेनेश्वरज्ञानस्यापि न नित्यत्वं वक्तुं शक्यम् ।

धर्मिग्राहकप्रमाणाच्चेत्तुल्यम् । ननु लीलासम्बन्धिपदार्थाः सर्वे स-पद्यनुभूयमाना एव, तद्भिन्ना वा । आद्ये तन्नित्यत्वं प्रत्यक्षबाधि-तम् । क्वचिच्च श्रूयमाणवैलक्षण्योपलम्भाच्च, न तथा वक्तुं शक्य-म् । द्वितीये त्वेतेषामपीतरपदार्थसाधारण्येन तल्लीलारसनिमग्नानामे-तेष्वेवासाधारणप्रेमानुपपत्तिः । तादृग्भक्तानामेतद्दर्शनादिना तद्र-सानुभवेनाह्लादविशेषस्यानुभूयमानत्वेन च न तथा वक्तुं शक्य-मित्युभयतःपाशा रज्जुः । नच भिन्नत्वेऽप्यभिन्नत्वभ्रमात् प्रेमा-द्युपपत्तिः । दृश्यते हि स्वप्नप्रतीतप्रमदादर्शनादिना पारमार्थिक-स्खलनादिरिति वाच्यम् । एवं तादृशाह्लादोपपत्तावपि तत्र तत्र वेणुकिङ्किण्यादिश्रवणतत्सौरभविशेषानुभवप्रदीपाद्यनुभवानां पा-रमार्थिकानामनुपपत्तेः । न ह्यभिमानमात्रेणोक्तानामनुभवः सम्भ-वति । अन्यथा जागरितस्यापि प्रमदास्पर्शाद्यनुभवप्रसङ्गः । तादृ-शेषु भ्रमानुपपत्तिश्चेद् इत्याशङ्कानिरासस्तु ‘ दिवीव चक्षुराततमिति श्रुतिव्याख्यानेनैव कृत इति दिक् ॥

नन्विति ॥ हन्तेति च ॥ यद्यपि प्रतिबन्देरनुत्तरत्वं तथापि ध-र्मिग्राहकाणां पूर्वोक्तप्रमाणानां प्राबल्यादभीष्टसिद्धौ प्रतिबन्देः परप्र-तिपत्तिमात्रार्थत्वादश्रोत्तरत्वमेव, परप्रसिद्ध्यापरबोधनसौकर्यादिति तथाचेश्वरज्ञानवत्तत्कर्मणोऽपि लोकविलक्षणत्वान्न तेन लौकिककर्म-स्वरूपमर्यादाभङ्ग इत्यर्थः । एवं त्रयोविंशचतुर्विंशौ परिहृतौ । अत्र प्रत्यक्षत्वादिदोषद्वयपरिहाराय पूर्वोत्तरपक्षावाहुः ॥ ननु लीलेत्या-दि ॥ प्रत्यक्षबाधितमिति ॥ अश्रवणादिप्रत्यक्षेण बाधितम् ॥ वैलक्ष-ण्येति ॥ यथा रत्नबद्धोभयतटीत्यादि ॥ तादृशेष्विति ॥ उत्कटभक्ति-मत्सु । एवमाशङ्क्य तत्समाधिं स्मारयन्ति ॥ दिवीवेत्यादि ॥ तथाच तद्व्याख्याने, दिवि स्वर्गे यथेत्यादिना स्वर्गीयाणां पदार्थानां महदु-द्भूतरूपवत्त्वेऽपि स्वर्गस्थदृश्यत्वमेव, न त्वदृश्यत्वमपि । तथैव वस्तुसामर्थ्यात्तथैवात्रापि श्रौतदृष्टान्तबलेन साधारणजनाविषयत्वं स्थापितम् तेन सर्वानुभूयमानपदार्थेभ्यो भिन्नत्वमर्थादेव सिद्धमि-ति प्रत्यक्षबाधोऽनवसरादेव पराहतः । लौकिकेष्वपि भक्तानां लीला-

सम्बन्धित्वेन बुद्धिस्तु, चक्षुरिति द्वितीयैकवचनान्तमित्यादिना सर्वा-
ऽनुभूयमानस्य तद्वृत्तिलाभस्थानत्वव्यवस्थापनाद् अस्य तत्सम्ब-
न्धिसम्बन्धित्वप्रयुक्तत्वाद्बाधकत्वेन पर्यवस्यतीति न दोषलेश इति
भावः । एवं पञ्चविंशषड्विंशौ परिहृतौ ॥
अतः परं प्रमाणयोरितरेतरविरोधो लीलास्थानां नाशानुभावादिचेति
दोषद्वयपरिहाराय तत्सूचकं पूर्वपक्षमाहुः ।

ननु प्रभासीयकथायाः कथं सङ्गतिरिति चेदुच्यते । भगवान्
हि सर्वलीलायुतः प्रकटः सदा । तथाच यथा धर्मरक्षा, सद्रक्षा देव-
कार्यकरणं भूभारहरणादिकं भगवल्लीला, तथैवासुरव्यामोहनमपि
लीलैव । मोहनं च माययैवेति निश्चयः । एवं सति आसुरमोहनार्थं
या लीला सा मायिकीति मन्तव्या । तस्यां च लौकिकत्वेन ज्ञा-
नेन भगवत्यपि लौकिकत्वज्ञानमासुराणामेव, न दैवानाम् । यत-
स्तदर्थमेव तत्करणम् । अत एव भगवताप्युक्तम् । अवजानन्ति
मां मूढा मानुषीं तनुमाश्रितम् * परं भावमजानन्तो मम भूतमहे-
श्वरम् ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसी-
मासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ महात्मानस्तु मां पार्थ !
दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्य-
यम् । मामव्ययमितिपदाभ्यां यः प्रकटो दृश्यते, तमेवाऽविकृतिं
जानन्तो भजन्त इति गम्यते । अपिच भगवद्गीतास्वेव । यदक्षरं
वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः । यदिच्छन्तो ब्रह्म-
चर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये, इत्युपक्रम्याक्षरस्वप्रा-
प्त्युपायो निरूप्य, स्वप्रासौ च विशेषमुक्त्वा पुनर्भगवतोच्यते ।
अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे । रात्र्यागमे प्रली-
यन्ते तत्रैवाव्यक्तसंज्ञके ॥ भूतग्रामः स एवायं भूत्वा भूत्वा प्रली-
यते । रात्र्यागमेऽवशः पार्थ ! प्रभवत्यहरागमे ॥ परस्तस्मात्तु
भावोऽन्यो व्यक्तोऽव्यक्तात् सनातनः । यः स सर्वेषु भूतेषु

नश्यत्सु न विनश्यति, इत्यादि । एतदन्ते च, पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्ययेत्युक्त्वा, परस्य लक्षणमुच्यते, यस्याऽन्तःस्थानि भूतानि येन सर्वमिदं ततमिति । अत्र च, यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति, तस्यैव लक्षणं, यस्यान्तःस्थानि भूतानीति पदेनोक्तम् । एतल्लक्षणवत्त्वं च मृत्स्नाभक्षणजृम्भादिलीलानिरूपणप्रस्तावे पक्षान्तरनिरासपूर्वकं भगवतो दृश्यस्वरूपस्यैव नैसर्गिकधर्मत्वेन दशमस्कन्धे निरूपितम् । अपि च तत्रैव दामोदरलीलाप्रस्तावे तस्मिन्नेवोदरे दाम्नामनवच्छेदकत्वं निरूप्यते । तेन तस्योदरस्यैव ब्रह्मत्वं निरूपितं भवति । उदरस्याब्रह्मत्वे, दामभिरनवच्छेद्यत्वे देशकालापरिच्छिन्नत्वं ब्रह्मधर्मं हेतुत्वेन 'न चान्तर्न बहिर्यस्य' इत्यादिना न निरूपयेत् । व्यधिकरणत्वापत्तेः । तथाच धर्मिग्राहकमानैर्विग्रहस्यैव ब्रह्मत्वं निश्चितमिति तद्विरुद्धधर्माणामसतामेव प्रदर्शनमसुरव्यामोहायेति निश्चीयते । अन्यथाऽनुपपत्तेर्बलिष्ठत्वात् । उक्तञ्च ब्रह्माण्डपुराणे । अमोहाय गुणा विष्णोराकारश्चिच्छरीरता । निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते ॥ एतद्विरुद्धं यत् सर्वं तन्मोहायेति निश्चयः । अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा । तथा प्राकृतदेहत्वं देहत्यागादिकं तथा । असुराणां विमोहाय दोषा विष्णोर्नहि क्वचित् । तथाच पद्मपुराणे पाषण्डप्रवर्तनार्थं वृषध्वजमाज्ञापयता भगवतोक्तम् । त्वामाराध्य तथा शम्भो ! ग्रहीष्यामि वरं सदेति । न ह्यन्याराधकत्वं भगवति सम्भवति । तस्य जीवधर्मत्वात् । तस्य यथा स्वस्मिन्नसत एव प्रदर्शनं लोकव्यामोहाय तथा तस्या अपीति मन्तव्यम् । अपिच यथेन्द्रजालविद्यायां नटस्य स्वर्गगमनं, तत्र युद्धं, तेन तन्मरणं, मृतस्यात्र पातः, तस्मिन् स्त्रियाश्च सहगमनादिकं पूर्वमनुभूतं, पश्चात्कालीनेन तदागमनेन प्रत्यक्षप्रमाण-

सिद्धेन मायिकम् इति निश्चीयते । तथा, जयति जननिवास इत्याद्युक्तश्रुतिस्मृतिभिः पूर्वपूर्वलीलाया नित्यत्वं सिद्धमित्यनन्यगत्यैवाऽस्या लीलायाः प्रदर्शनमात्रपरत्वमध्यवसेयम् । नचैतदनुरोधेन पूर्वलीलानामेव तथात्वं वक्तुं शक्यम् । तासामुक्तप्रमाणैर्नित्यत्वेनैव सिद्धत्वात् । नचोक्तदृष्टान्तन्यायेन पूर्वं तथा सिद्धमिति पश्चाद् बाध्यमिति वाच्यम् । तत्र लौकिकत्वेन प्रमाणस्य दोषस्यापि सम्भवेऽपि प्रकृते दोषासम्भवात् । अत्र पूर्वोक्तन्यायेन लीलानामन्योऽन्यं बाध्यबाधकभावाभावेन तथा वक्तुमनवसरश्चेत्यलं विस्तरेण ॥

नन्वित्यादि ॥ कथं सङ्गतिरिति ॥ पूर्वोक्तप्रमाणैर्हि लीलास्थयोर्नित्यत्वं तत्कर्तुश्च प्रदृश्यमानविग्रहभिन्नत्वं नित्यत्वं च व्यवस्थापितम् । तथा सति द्वारिकालीलास्थानामपि तथात्वमावश्यकम् । एकादशे स्कन्धे च यदुकुलस्य शापपूर्वको नाश उच्यते । लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् * योगधारणयाग्नेय्या दग्ध्वा धामाविशत् स्वकमित्यनेन स्वरूपस्याप्यन्यथाभाव उच्यते । तथा सति प्रमाणयोर्लीलयोश्च विरोधात् प्रदर्शनमात्रार्थत्वं सर्वस्यायाति । यदि च स्वप्नादिवैधर्म्यान्मायिकत्वं नाङ्गीक्रियते तदापि सत्कार्यवादस्य पूर्वं साधितत्वादत्रापि तन्न्यायेन कार्यत्वे सिद्धे नित्यत्वस्यैव दार्ढ्यमंशावतारणाच्च । तथा अक्रूरभौमाहृतादीनां पुराणान्तरे पूर्वजन्मकथनादपि तथा । एतेनैव प्रथमतृतीयस्कन्धीयार्जुनोद्धवोक्ती भारतविष्णुपुराणादिस्थमौशलादिकथापि व्याख्याता । अतो विग्रहलीलातत्सम्बन्धिनां नित्यत्वे बहुवाक्यविरोधादस्याः सङ्गतिर्न भवित्रीत्यतः प्रश्नः, कथं सङ्गतिरिति ॥ तत्र तस्याः सङ्गतिं व्युत्पादयितुं विग्रहादेर्नित्यत्वेऽपि सङ्गतिर्न दुर्घटेत्याशयेन आविर्भूतस्य भगवतः सामर्थ्येन तदुपपत्तिमाहुः ॥ उच्यते भगवानित्यादि, लीलैवेत्यन्तम् ॥ तथा च तदपि लीलात्वात् स्वरूपसाध्यमिति तदा नियमस्वरूपनित्यमिति तत्सामर्थ्येन वैतदुपपत्तिरित्यर्थः । सा कया विधयेत्याकाङ्क्षायां तत्करणं तस्याः स्वरूपं तां च विधां चाहुः ॥ मोहनं चेत्यारभ्य, करणमित्यन्तम् ॥ इयं च लीला असुरार्था, न देवार्थेत्यत्र मानमाहुः ॥

अत एवेत्यादि ॥ तथाचैतद्वाक्ये स्वावज्ञायास्तद्भावप्रकारकथनपूर्वकमुक्त्वास्तेषां मूढत्वेन मोहस्य सार्वत्रिकत्वात्तिरोभावावसर एवंप्रकाराऽकरणे मोहशैथिल्यं भवेदतस्तथा करणम् । तेन च देवानां न मोह इति । तस्य मोहस्याऽव्याख्यातत्वादेव ज्ञानप्रकारमाहुः ॥ मामित्यादि ॥ तथाचासुराणामेवान्यथा बुद्धिर्न देवानामिति पूर्वोक्तं युक्तमेवेत्यर्थः । एवमस्या लीलाया असुरार्थत्वे सिद्धे स्वरूपनित्यत्वं निष्प्रत्यूहमेवेत्याशयेन तन्नित्यत्वसाधकमानान्तरमप्याहुः ॥ अपिचेत्यादि ॥ निरूप्यते ॥ ओमित्येकाक्षरं ब्रह्मेत्यनेन, अनन्यचेता इत्यनेन च निरूप्यते ॥ अनुक्त्वेति ॥ मामुपेत्य पुनरिति श्लोकेऽनुक्त्वा ॥ एतदन्त इति ॥ एवमक्षरस्वरूपनिरूपणोत्तरम् । एवं गीतोक्तं प्रमेयं निरूप्य तादृशत्वं भगवति निगमयन्ति ॥ एतदित्यादिना ॥ सिद्धमाहुः ॥ तथाचेत्यादि ॥ एवं प्रभासीयलीलाया मायिकत्ववादेऽर्थ स्वरूपनित्यत्वं पुनरत्र स्मारितम् । तेन लोकाभिरामामित्यनेन यः स्वरूपस्यान्यथाभाव उक्तः स प्रदर्शनमात्रमेवेति बोधितम् । एवमेव ब्रह्माण्डपुराणेऽप्युच्यते । तदेव हि ब्रह्मतर्कस्तवटीकायामप्पय्यदीक्षितेनोपन्यस्तम् । तथाहि । निर्दोषश्चेत् कथं विष्णुर्मनुष्येषु प्रजायते * चिन्ताश्रमव्रणाज्ञानदुःखयुग् दृश्यते कथम् ॥ एवं मे संशयो ब्रह्मन् हृदि शल्य इवार्पित इति नारदप्रश्ने । स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते * किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ॥ तथाप्यासुरमोहार्थं परेषां च क्वचित् क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः ॥ क्व व्रणादि क्वचाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे । दौर्लभ्यार्थं च मोक्षस्य दर्शयेन्नत्वजो हरिः । कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृतिमिति ।

तथैव श्रीशुकैरपि श्रीभागवत उक्तम्— राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य * सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चाऽन्ते संहृत्य चाऽऽत्ममहिम्नोपरतः स आस्ते ॥ मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् । जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वाऽवने ? स्वरनयन् मृगयुं सदेहम् ॥ तथाप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् । नैच्छत् प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्व-

स्थगतिं प्रदर्शयन्निति श्लोकत्रयेण । अत्रायमर्थः । पूर्वं यदुकुलनाशः स्वरूपान्यथाभावश्चोक्तः । तत्र योगधारणयाऽऽग्नेय्या दग्ध्वा धामाविशदित्यकारप्रश्लेषस्यापि संभवदुक्तिकत्वात् किमदग्ध्वा उत योगिवद्दग्ध्वा धामाविशदिति सन्देहे, तं वारयितुं प्रवृत्तो लीलातत्सम्बन्धिस्वरूपविषयकं संदेहं प्रथमेन वारयति । अन्यथा तृतीयश्लोकेनैव तन्निवृत्तेराद्यौ न वदेत् । तथा सत्ययमर्थः । राजन् परस्याक्षराद्प्युत्तमस्य तनुभृतां यादवादीनां जननाप्ययेहा उत्पत्तिनाशचेष्टाः, मायाविडम्बनं मायानुकरणमवेहि । परो हि नित्यलीलासम्बन्धिनां समागमने स्वमायया उत्पत्तिनाशत्वेन प्रत्याययति । तत्र दृष्टान्तः । यथा नटस्येति । नटो यथाऽन्यदन्यत् प्रत्याययति तथेत्यर्थः । इदमेव पूर्वाध्याये मौशलाक्लिष्टं दारुकं प्रति भगवतोक्तम् । त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः * मन्मायारचितामेतां विज्ञायोपशमं व्रजेत्यनेन । एतामित्यनेनात्र सन्निहितस्य, गच्छ द्वारवतीं सूतेति श्लोकत्रयोक्तस्यैव परामर्शात् सर्वस्य मायिकत्वेऽभिसंहिते सर्वामित्येव वदेत् । अतस्तदनुवाद एव मायाविडम्बनमित्यत्रेति निश्चयः । परत्वं निगमयितुमिदानीं षष्ठगुणयोगमाह ॥ सृष्ट्वेत्यादि ॥ महिम्नेर्महिमा । तथाच प्रलये यथा च सर्वं स्वात्मनि निवेश्योपरतस्तात्कालिकपरिकरयुक्तस्तिष्ठति तथेदानीमास्त इत्यर्थः । श्रीधरीये तु तनुभृत्सु यादवादिषु आविर्भावतिरोभावान्तरे जननाप्ययव्यवहाराभावेन तावतैव चारितार्थ्यात् । तस्मादुक्त एवार्थः । एवं सपरिकरस्य स्थितौ बोधितायां पुनः सन्देहः स्यात् । ननु मूलरूपेण तथास्तु, अवताररूपे तथात्वं कथमवगन्तव्यमिति तदर्थसामर्थ्यमाह । मर्त्येनेति । अन्तकान्तकं मृत्युञ्जयम् । स्वावने स्वीयानामवने । तथाच मर्त्यशरीरस्य नाशोत्तरं चिरकालेऽपि गुरुसुतानयनेन ब्रह्मास्त्रदग्धस्वदानयनेन मृत्युञ्जयजयेन च लोके वेददेवाद्यप्रतिबद्धसामर्थ्यस्येदानीमपि स्वापराधिमृगयुस्वर्नयनेन प्रकटीकरणात् सर्वकालमेकरूपमेव सामर्थ्यं विनिगन्तव्यम् । तथाच मूलरूपमेवेदमित्यर्थः । एवमेव वज्रोद्धवयोः स्थापनाद् ब्राह्मणवाक्याप्रतिबद्धत्वमपि सामर्थ्यं बोध्यम् । तर्हि सामर्थ्ये विद्यमाने तानात्मानं च कुतो न रक्षितवानित्याकाङ्क्षायां तत्कारणं भक्तिस्थितिमर्यादां चाह । तथापीत्यादि । अनन्यहेतुर्निरपेक्षककारणम् । तथाच देवकार्यार्थं

प्रकटस्तदर्थं तेऽप्यवतारिताः । यदा तत्सर्वं कृतं तदा स्वस्य भूमौ कार्याभावात् स्वधामजिगमिषायां तेषां वपुरत्र शेषितं प्रणेतुं नैच्छत् । तद्धि मर्त्यमपि वं सुखं पुष्णातीति भगवद्स्थितौ सुखाभावेन तत्पोषस्य सुतरामभाव इत्यतो नैच्छदित्यर्थः । तदाह । मर्त्येन किं, स्वस्थगतिं प्रदर्शयन्निति । स्वस्था भगवदेकनिष्ठाः । ते हि भगवदिच्छाऽनुरूपमेव कुर्वन्ति । तैरेवमवगतं– भगवानेवमसुरान् व्यामोहयिष्यति इति ततस्तथा कृतवन्त इति तेषां गतिं प्रकृष्टामुत्तमां दर्शयन् विद्यमानेऽपि सामर्थ्ये तान्न रक्षितवानिति भावः । तेन यथा प्राकट्यावसरे बभूव प्राकृतः शिशुरिति तत एव तथाभवनेन प्राकृते बुद्धिरुत्पादिता तथा तिरोधानावसरे स्वतोऽग्निप्राकट्येनात्मानं योगिनमिव प्रदर्शयता स्थिरीकृता । लौकिकप्रकारकरणे तु भक्ता अपि व्यामुह्येरन् । प्रकारान्तरे असुरा अपि व्यामोहं शिथिलं कुर्युः । यथाऽयोध्यानयनेन । अत उभयस्यार्थे स्वतन्त्रेच्छ एव नात्र्यं समापितवान् । जनिष्यमाणदैत्यव्यामोहस्थिरीकरणरूपदेवकार्यस्यैतावतैव सिद्धेरिति, लोकाभिराममिति श्लोकतात्पर्यं सिद्ध्यति । अत एव प्रथमस्कन्धे । ययाऽहरद् भुवो भारं तां तनुं विजहावजः * कण्टकं कण्टकेनैव द्वयं चापीशितुः समम् ॥ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः । भूभारः क्षपितो येन जहौ तच्च कलेवरमिति द्वयेन नटदृष्टान्तपूर्वकं भूभारहर्तुर्देहस्यैव त्याग उक्तो लीलान्तरकर्तुः । तेनाप्यन्तरासृष्टिरूपस्यैव देहस्य त्यागः सिद्ध्यति । यथा नटो नाट्यवेषमेव दूरीकरोति न स्वीयं रूपमिति । स्वस्मिन् प्राकृतत्वबुद्ध्यापादकं यद्रूपं तेन नाट्येन त्यक्तं, न तु मूलरूपं व्यूहरूपं चेति फलति ।

न च व्यूहमूलरूपयोरभेदः । वृष्णीनां वासुदेवोऽस्मीति विभूतौ कथनात् । किञ्च । तेनान्यदपि कार्यं साधितम् । एकं भगवतः कार्यं बह्वर्थानां च साधकमिति शास्त्रार्थात् । तथाहि । वेदः सर्वोऽपि भगवल्लीलाप्रतिपादकः । तथाच जातकर्मादिप्रतिपादकसार्थकत्वाय यथा तदनुकरणमेवं सांपरायिकप्रतिपादकस्यापि तस्य तथात्वायैवं करणम् । देवानामप्यद्भुतरसोत्पादनायैवैतत् । तदुक्तं तत्रैव । देवादयो ब्रह्ममुख्या निविशन्तं स्वधामनि * अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ सौदामिन्या यथाऽऽकाशे यान्त्या हित्वाऽभ्रमण्डलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ देवादयो

ब्रह्ममुख्या दृष्ट्वा योगगतिं हरेः । विस्मितास्तं प्रशंसन्तः स्वधामानि ययुर्मुदेति ॥ नन्विदमुक्तमनुचितम् । हासो जनोन्मादकरी च मायेति वाक्यात् स्मितस्य मायात्वेन तत्कृतकामदेवादिवर्द्धनस्यापि मायिकत्वप्रसञ्जकत्वादितिचेन्न । तस्य मायाया एतद्भिन्नत्वात् । फलभेदेन तथानिश्चयात् । दृश्यते हि मरुदेशराजधान्यां मायाविरचितदाडिमानामिदानीमपि फलानि । तान्युपभुञ्जानानां च तद्रसानुभवतापोपरमादयः । अन्यत्र च दर्शनमात्रता मायाविरचितानाम् । तेन तत्रैवाऽत्रापि फलवैजात्येन कारणवैजात्यमनुमेयम् । यदि च कारणवैजात्यं न मनुषे तदापि फलवैजात्यस्य प्रत्यक्षसिद्धत्वान्न पूर्वत्र दोषसञ्चारः । दर्शननिरस्तत्वात् । प्रकृते च शब्दसिद्धत्वाद् वरणाऽग्निमुपनिषदुक्तां परमात्मत्वानुभूतामग्निशिखां वा प्रकटीकृत्य तस्मिन् स्वयमन्तर्भूय पूर्वप्रतिपादितं स्वनित्यलीलास्थानं प्राविशदिति निबन्धोक्तो निष्कर्षः । तदेतद्ब्रह्माण्डपुराणब्रह्मपुराणाभ्यामपि द्रढयन्ति वादिमुखध्वंसाय, उक्तं चेत्यादि ॥ ब्राह्मोक्तमशत्वादिकं रसस्वरूपातिरिक्तस्वरूपसम्बन्धीति बोध्यम् । तेन प्रियाविप्रयोगसामयिकाज्ञत्वस्य, भक्तपारवश्यस्य, आत्तगजेन्द्रलील इत्याद्युक्तविधिभेदस्य च न दोषावहत्वम् । तत्र रसस्वरूपादिना तथैव सिद्धत्वात् । तथा सति, त्वं हि नः परमं चक्षुरित्याद्युक्तमज्ञत्वं तथा । अत एव, मन्त्रेषु मां वेत्याद्युद्धववाक्यम् । एवं पारवश्यमपि, तत्तस्य कैङ्कर्यमऽलंभृतां न इत्यादिवाक्योक्तम् । विधिभेदोऽपि शतधनुर्वधादिरूपः । आदिपदेन विभ्यकरणम् । यथा यवनेन सह युद्धाकरणम् । प्राकृतदेहत्वं सत्त्वदेहत्वम् । देहत्यागादिकमित्यादिपदेन शाल्वयुद्धादौ प्रकृत्युपप्लवः, सांपरायिकक्रियाकरणादिकं च तत्र संगृहीतं बोध्यम् । प्रसङ्गात्तदीयधर्मान्तरमपि मृशन्ति ॥ तथाचेत्यादि ॥ अनन्यगत्येति ॥ उक्तशुकवाक्यस्यावतारोत्तरतिरोभावोत्तरकालीनत्वात् तत्रत्यानां जयत्यादीनां वर्त्तमानार्थकप्रयोगाणामन्यथानुपपद्यमानत्वात् तदनन्यगत्येत्यर्थः ॥ अत्र पूर्वोक्तन्यायेनेत्यादि ॥ नटदृष्टान्ते यथा जीवनं प्रामाणिकम् । तन्मरणस्य बाधकम् । सामग्र्यऽङ्गता चावयवविशरणस्य बाधिका । तन्न्यायेनाऽत्र प्रभासीयलीला न तच्छरीरादिबाधिका । उक्तप्रमाणविरोधेन तद्दर्शनस्याप्रामाणिकत्वात् । अतस्तथा कथनमनवसरपराहतमित्यर्थः ॥ अलं वि-

स्तरेणेति॥ ब्रह्माण्डपुराणे नारदप्रश्नब्रह्मोक्तराङ्यामेकादशस्कन्धसमाप्तौ च कण्ठत एवास्यां लीलायां मायिकत्वस्य कथनात्तथेत्यर्थः।

ननु तस्यामेव लीलायां न मायिकत्वं, किन्त्वखिलप्रपञ्चस्यैव तथात्वम्। एकादशीयसमाप्ताध्याये भगवता उद्धवं प्रति तथोपदेशादित्याशङ्कायामाहुः।

एतेन, यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः * नश्वरं गृह्यमाणं तद्विद्धि मायामनोमयमिति भगवद्वाक्यं लीलामध्यपात्यन्तरङ्गभक्तं प्रत्युक्तमिति न वास्तवत्वं कस्याप्यर्थस्य वक्तुं शक्यमितिकुचोद्यं निरस्तं वेदितव्यम्। उक्तरीत्या आसुरव्यामोहाय प्रदर्श्यमानानामर्थानामेव, यदिदमित्यादिना कथनात् अन्यथा, नश्वरमितिनोक्तं स्यात्। गृह्यमाणमित्येतावतैव सर्वप्राप्तेः। एवं सति द्विजशापेन नश्वरमिति गृह्यमाणं तत्तथेत्यर्थः पर्यवस्यति। अत एव, यदिदं मनसा वाचा गृह्यतेऽन्यैरपीन्द्रियैः * अहमेव, न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसेति भगवतो हंसस्य वचनं गीयते। अत्र विद्वद्भिरेवं ज्ञेयम्। आदौ निगूढाशयेन शुकदेवेन, भूभारराजपृतना इत्युपक्रम्य, संजह्रस्वकुलं विभुरित्यन्तेन मोहिका लीला सामान्यत उक्ता। अत्राऽस्वकुलमिति निगूढः पदच्छेदो ज्ञेयः। वास्तव्यां नैसर्गिक्यां लीलायां भुवि प्रकटतया सत्यां कथमेवं सम्भवतीति निरासाय स्वमूर्त्येति द्वयेनाग्रे भुवि लीलाप्राकट्यप्रयोजनाभावं ज्ञापयितुं लीलाप्राकट्यप्रयोजननिष्पत्तिकथनपूर्वकं सर्वादृश्यत्वलक्षणं पदमगादित्युक्तम्। लौकिक्या भूमेरधिष्ठानत्वमात्र उपयोगादस्वाभाविकत्वमिति तद्विलक्षणं पदमिति ज्ञापनाय स्वं पदमगादित्युक्तम्। अग्रे च ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनां विप्रशापः कथमभूद् वृष्णीनां कृष्णचेतसामिति राजप्रश्नवाक्यव्याजेन नित्यलीलामध्यपातियादवस्वरूपनिरूपणेन प्राप्तशापानां तद्भिन्नत्वं ज्ञापितं व्यासेन। बिभ्रद्वपुः

सकलसुन्दरसन्निवेशं कर्माचरन् भुवि सुमङ्गलमाप्तकामः * आ-स्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्य-शेष इत्युत्तरे तु स्वरूपं लीलां च भुवि प्रकटीकुर्वन् प्रयोजननि-ष्पत्तिं ज्ञात्वा धाम सहजं नित्यं यल्लीलास्थानं तदेवास्थाय रममा-ण एव, स्थितकृत्यशेषः स्थितोऽग्रिमासुरव्यामोहलक्षणः कृत्यशेषो यस्य तादृशः कुलं संहर्तुमैच्छतेत्येकेन शुकैरुक्तम् । तेनास्य कुल-स्य मायिकत्वं सम्भवति । कृत्यसिद्धिर्यतस्तथैव भवति । भुवीति पूर्वमुक्तमेवेति तद्भिन्नमेव धाम वाच्यम् । तदुक्तमस्माभिः । अग्रे-ऽपि कालात्मना निसृष्टा मुनय इत्युक्तम् । न तु पूर्वलीलाकर्त्रेति ॥

श्रुत्युक्तवैपरीत्येन यन्मोहाय हरिः स्वयम् ।
प्रदर्शयति तन्मोहगमनायेति तद्वचः ॥
क्षिपाम्यजस्रमित्युक्तेर्यतस्तन्मोहनित्यता ।
अतोऽनङ्गीकृतिस्तेषां युक्ता तामसिनां नृणाम् ॥
तत्सङ्गादन्यथाभूतहृदयाः सात्त्विका अपि ।
मा भवन्त्विस्रयं यत्नस्तेन तुष्टोऽस्तु मे हरिः ॥
काञ्चनीकरणे शक्तो मणिर्धातुगणस्य यः ।
तस्याश्मनां तथाभावाकरणेऽपि न हि क्षतिः ॥

एतेनेत्यादि ॥ एतेनेति ॥ प्रभासीयलीलाया मायिकत्वोपपादनेन ॥ अन्यथेति ॥ सर्वस्य मिथ्यात्वे ॥ एवं सतीति ॥ अस्मिन् वाक्ये नश्वरपदनिर्देशे सति । उक्तदृष्ट्येतिपाठः । ननु हंसगीतायामेव, ईक्षे-त विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् * विज्ञानमेकमुरुधेत्यादौ, जगन्मिथ्या विनष्टत्वात्, स्वप्नवत् - अतिलो-लत्वात्, अलातचक्रवदित्येवं जगन्मिथ्यात्वसाधकानुमानबोधना-त्तत्र प्रभासीयप्रसङ्गाभावेन वाक्ये तद्विषयत्वस्य वक्तुमशक्यत्वादि-तिचेन्न । अत्रापि विज्ञानमित्युत्तरार्द्धे, त्रिधा गुणविसर्गकृतो विक-ल्पविज्ञानम् । उरुधा विभानात् । मायावत् । स्वप्नवदित्यनेन स-गुणसृष्टेरन्यख्यात्यविज्ञानरूपत्वनिगमनेन निरीश्वरस्मार्तसृष्टावेव

तथा पर्यवसानात्, सदेव सोम्येत्यादिश्रुत्युक्तप्रपञ्चमिथ्यात्वानापादकत्वात् । अन्यथा पूर्ववाक्यविरोधस्यापरिहारेण द्वयोरप्यसङ्गतत्वापातात् । तत्रापीन्द्रियग्राह्यस्यैव स्वाभिमतत्वबोधनात् । अतस्तत्रापि विषयभेदोऽवश्यमभ्युपेयः । एवमेव द्वादशाध्यायसन्दर्भेऽपि ज्ञेयम् । तत्रापि, स एष जीव इत्यारभ्य, पटो यथा तन्तुवितानसंस्थ इत्यन्तैः सार्द्धचतुर्भिर्भगवद्रूपं प्रपञ्चमुक्त्वा, य एष संसारतरुरित्यारभ्य, मायामयं वेद स वेद वेदमित्यन्तैः सार्द्धैस्त्रिभिर्द्वितीयस्य कथनात् । अत एव पूर्वत्र, अयं हि जीवस्त्रिवृदब्जयोनिरित्यनेन त्रिगुणाधारत्वं लोकपद्मकारणत्वमेकत्वादिकं चेति तस्योक्तम् । द्वितीये तु, द्वे अस्य बीजे इत्यनेन कारणद्वयं बाधितम् । तेनात्रापि पूर्ववदेव निरीश्वरसृष्टौ पर्यवसानं बोध्यम् । एवमन्यत्रापि वैराग्यार्थे नृसिंहतापिनीयोक्तामैन्द्रजालिकसृष्टिमादायैव बोध्यते इति, पुराणेष्विति निबन्धोक्तदिशाऽवगन्तव्यम् । तदस्मत्पितृचरणैरावरणभङ्गे सम्यक् प्रदर्शितमिति नेह प्रपञ्च्यते । प्रकृतमनुसरामः । ननु प्रभासीयलीलासम्बन्धिनां मायिकत्वे द्वारिकालीलास्थानामपि मायिकत्वमेव सिद्ध्यति । द्वारिकास्थानामेव शापात् । शप्तानामेव च तथाभावादित्याशङ्कायामाहुः ॥ अत्र विद्वद्भिरित्यादि ॥ स्वमूर्त्येति द्वयेनेति ॥ स्वमूर्त्या लोकलावण्यनिर्मुक्त्यालोचनं नृणाम् * गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ॥ आच्छिद्य कीर्तिं सुश्लोक्यां वितत्य ह्यञ्जसा नु कौ । तमोऽनया तरिष्यन्तीत्यगात् स्वं पदमीश्वर, इति द्वयेन ॥ तद्भिन्नत्वमिति ॥ यादिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् * लोकं जिघृक्षुरुद्धं वेलयेव महार्णव इति भगवद्वाक्योक्तधर्मवत्त्वाद्भूद्धसेवितत्वे च तदभावात्तेषां तद्भिन्नत्वम् । ननु बिभ्रद्वपुरित्युत्तरेऽकुलमिति पदच्छेदस्याशक्यत्वान्नैवं वक्तुं शक्यमित्यत आहुः ॥ बिभ्रदित्यादि ॥ तथाच यथा, द्व्याह प्राजापत्यात्रावेकगोलके देवासुरभेदभिन्नानीन्द्रियाणि । तथैव पुरुषाविष्टभूतन्यायेन तेष्वाविष्टं यदुकुलं तदेव तथेत्यर्थः । अत्रैवं बोध्यम् । प्रथमस्कन्धेऽर्जुनोक्तावेवं बलिष्ठैर्यदुभिर्महद्भिरितरान् विभुः * यदून् यदुभिरन्योऽन्यं भूभारान् सञ्जहार हेति । एकादशे भगवद्विचारानुवादे च, भूभारराजपृतना यदुभिर्निरस्य गुप्त स्वबाहुभिरचिन्तयदप्रमेयः * मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद् यादवं कुलमहो अविषह्यमास्ते इत्यनेन च

भूभारभूतत्वमुक्तम्। तृतीयस्कन्धे चोद्धवैः, दुर्भगो बत लोकोऽयं यद्वो नितरामपीत्युक्ता, ते सर्वे ? उत केचिदेवेत्याकाङ्क्षायां, ये संवसन्तो न विदुर्हरिं मीना इवोडुपमिति पूर्वोक्तानां स्वरूपमुक्तम्। इङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्वताः * सात्वतामृषभं सर्वे भूतावासममंसतेत्यनेन विपरीतज्ञानवत्त्वं चोक्तम् । एवमान्यत्रिकमपि। एवंभावश्च न नित्यलीलास्थेषु घटते। एवं सति स्वस्मिन्निव परिकरे प्रियाकृतत्वबुद्ध्युत्पादनाय यन्नाट्यमंशावतरणादिना कार्यसृष्टित्वप्रतिपादकमारब्धं तल्लोकवत् कार्यदेहावस्थाप्रदर्शनप्राणत्यागचिताग्निप्रवेशसांपरायिककारणादिना चाऽसुराणां स्वपरिकरे लौकिकत्वबुद्धिस्थिरीकरणेनैवं समापितम् . एतदेवात्रापि, यथेन्द्रजालेत्यादिना पूर्वं सूचितम्। आद्यन्तमेकरीत्या नाट्य एव हि नटस्य माहात्म्यमन्यथा वैदग्ध्यहानिरित्यतः स्वस्मिँस्तथा प्रदर्शनं, परिकरे चैवं प्रदर्शनमित्यपि सर्वं निबन्धे–रामस्य सत्त्वदेहस्तु पूर्वमेव निरूपितः * बलवद्रुक्मिणीमुख्या नाट्यं सर्वमिहोदितमित्युक्तदिशा सिद्ध्यति तेनेदमेव हृदिकृत्य, यन्मायिकत्वकथनं पुराणेषु प्रदृश्यते * तदिन्द्रजालपक्षेण मतान्तरमिति ध्रुवमित्यनेनोक्तम्। एवं स्वभर्तुरभिप्रायं ज्ञात्वैव श्रीमदुद्धवस्यापि वृष्णिषु स्नेहपाशविच्छेदप्रार्थनादयः। अथापि तदभिप्रायं जाने्ऽहमरिन्दम * इतिवाक्यात्। एवञ्चात्रेदं बोध्यम्। प्रभुप्राकट्यसमयेऽवतारिता न सर्वे एव लीला, अपि तु कतिपये। स्वबाहुभिरिति यदुविशेषणाच्च। पूर्वजन्मांशावतरणादिकथनाच्च . अंशावतरणप्रकारश्च त्रिधा। जीवानां क्वचित्कार्य्यद्वारा स्वतेजःसंक्रामणरूपो यथा पाण्डवादिषु। तथा सति तदंशभूतशरीरे जीवान्तरप्रवेशः। क्वचित्तु शापादिना स्वदेहमन्यथा कृत्वाऽकृत्वा वाऽन्यबीजे वीर्ये वा सदेहाः प्रविश्यावतरन्ति। यथा यमलार्जुनविदुरादयः। क्वचित्तु पूर्वं देहं विहाय लिङ्गेन सहावतरन्ति । यथा श्रीनन्दादयः। तत्र पूर्वस्मिन् प्रकारे जीवस्य भक्त्यादिना यथाऽधिकारं फलं, देहस्य त्यागस्तदाविष्टस्य पूर्वदेहस्य पातोऽशस्यांशिनि प्रत्यापत्तिः। द्वितीये तु, यावदधिकारमिति न्यायाच्छायाद्युपात्तदेहस्य त्यागस्तदाविष्टस्य पूर्वदेहस्य यथास्थितताप्राप्तम् । यमलार्जुनादौ विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान् * कृष्णादेशेन तच्चित्तः पितृभिः स्वक्षयं ययावित्यादौ च तथा निर्णयात् ।

जन्मान्तरमापन्ना तु भगवत्सेवाकरणेन भक्त्या वा यथाधिकारं भगवति नित्यलीलायां ब्राह्मेण प्रवेशः । स्थूलसूक्ष्मशरीरयोस्त्यागः । भौमाहृतानां त्वष्टावक्रप्रसादशापाभ्यां भगवत्पत्नीत्वचोरहस्तगतत्वादि । तत्र लक्ष्म्यंशस्य लक्ष्म्यां प्रत्यापत्तौ कार्यदेहस्यान्यथात्वम् । गतश्रीषु गृहेष्विति वाक्यात् । तेन न कोऽपि दोषः । श्रुतीनां तु कार्यकोटावपि प्रवेशाच्छब्दब्रह्मात्मक एव देहः । अग्निकुमाराणामपि प्रसादरूपस्त्रीशक्तिरूपो ब्राह्म एव । यासां च कार्य आसीत् स तूक्त एव । तेनैव न्यायेन गोपीचन्दननिदानभूतदेहोऽपि व्याख्यातः । एवं महिष्यादीनां तु पूर्वमुक्त एवमेव एव यथासंभवमितरेषामपि ज्ञेयः । एवं सति यमनृगनलकूबरादिवत् सदेहानामेव कार्यदेहान्तरे प्रवेशकथनेनापि लीलास्थानां नित्यत्वसिद्धौ निष्प्रत्यूहायामपि सत्यां यत्प्रातिभासिकदेहाङ्गीकरणं तद्भगवद्वाक्यानुरोधात् । तदेतदुक्तं, तथेत्यर्थः पर्यवस्यतीत्यन्तेन । एतदेव दृढीकृतम्, अत एवेत्यारभ्य, न तु पूर्वलीलाकर्त्रेत्यन्तेन ॥ नच, कालात्मना भगवता शक्रदर्पं जिघांसतेत्यत्रापि कालात्मपदाभेदं सांप्रतमिति वाच्यम् । दर्पहतिमात्रे तत्करणभूतवाक्योक्तिमात्र एव च तद्रूपप्राकट्येनेतरलीलायां तद्भावेनादोषात् । कालस्य भगवच्चेष्टारूपत्वेन गुणीभूततया सर्वेऽपि अदोषाश्चेति । अयं चार्थस्तैत्तरीयाऽऽरण्यके भर्तृसूक्ताऽनुवाके भर्ता सन् भ्रियमाणो बिभर्तीत्यादिना प्रतिपादितः । तथाहि ॥ भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधा संनिविष्टः । यदा भारं तन्द्रयते स भर्तुं निधाय भारं पुनरस्तमेतीति ॥ भर्ता सन्, पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया, यस्यान्तःस्थानि भूतानीत्युक्तरीत्या धारकः सन्, यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः, यः पृथिव्यां तिष्ठन्नित्युक्तरीत्या भ्रियमाण एव बिभर्ति । तत्र हेतुः— एको देवो बहुधा निविष्ट इति । देवः क्रीडिता, बहुधा एकैकस्मिन् शरीरे वैश्वानराक्षिपुरुषप्रादेशमात्राङ्गुष्ठमात्रादिरूपैर्नानाप्रकारेण स्थितः क्रीडार्थं धारयति । यदा तत्क्रीडाविरागकाले भारं भूभारभूतं यादवकुलं भर्तुं तन्द्रयते आलस्यं प्राप्नोति तदा भारं पूर्वोक्तविधं क्वचित् प्रभासादौ निक्षिप्य पुनरस्तमेति । यथाऽवतारात् पूर्वमदृश्यमानः स्थितस्तथैवादर्शनं प्राप्नोतीति यथास्थितस्यैवास्तभवनमुक्तम् । एतदेव तृतीयस्कन्धे, कृष्णद्युमणिनिम्लोच इत्यनेना-

ष्ववैरुक्तम् । ननु भर्त्तव्यस्य कुतो भारता, येन भर्त्तुस्तन्द्रेत्याकाङ्क्षाया-माह ॥ तमेव मृत्युममृतं तमाहुः तं भर्त्तारं तमु गोप्तारमाहुः । संभृतो भ्रियमाणो बिभर्त्ति य एनं वेद सत्येन भर्त्तुमिति ॥
अत्र पूर्वार्धे अविदुषां विदुषां भक्तानां च ज्ञानप्रकारा उक्ताः । क्रमेण तत्कथनप्रयोजनमुत्तरार्द्धेनाह । य एनं भर्त्तारं सत्येनामायया भर्त्तुं धारयितुमनुसंधातुं वेद, संभृतः स तेन व्याप्तो भ्रियमाणस्तेनैवाऽऽविश्य धार्यमाणस्तं बिभर्त्ति । तथाच भक्ताऽतिरिक्ता न बिभ्रतीति भक्त्यभावात्तेषां भारता । तेन भर्त्तुस्तन्द्रेति सत्येनैव भर्त्तव्य इति तदुक्तिप्रयोजनमुदितम् । अथ पूर्वोक्तं पोषयितुं सर्वदा भगवदनुसंधानाय च तृतीयया भूभारहेतुं वदन्, समोऽहं सर्वभूतेष्वित्यनेनोक्तेऽर्थे निदर्शनमाह ॥ सद्योजातमुत जहात्येषः उतो जरन्तं न जहात्येकम् । उतो बहूनेकमहर्जहार अतन्द्रो देवः सदमेव प्रार्थ इति ॥
एष भर्त्ता सद्योजातं, भवद्भिरंशैर्यदुषूपजन्यतां, स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयँश्चरेदित्यत्र यावद्भूभारहरणमुपजननस्योक्तत्वात् प्रभासीयलीलायामपि भूभारहरणायेदानीं यो जातः सद्योजातः वज्रोऽन्यो वा तमुत जहाति भूमौ त्यजति । वज्रस्तस्यामभूद् यस्तु मौसलादवशेषितः * । स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जय * इत्यादिवाक्यात् । उतो अपि एकं जरन्तम् । उद्धवं न जहाति न त्यजति । स्वधाम नय मामपीतितदभिलाषात् स्वस्थाने बदर्याश्रमे तं प्रेषयन् ब्रह्मवादादिकं चोपदिशन्न त्यजति । उतो बहून् यादवान्, एकमहः । सप्तम्याः स्वादेशः । एकस्मिन्नहनि जहार भूर्लोकाद्यः हृतवान् । अतोऽयं देवः, अतन्द्रः अभक्तभक्तत्यागात्यागकरणे अनलसः । सदमेव सदैव प्रार्थः भक्तैर्भूत्वाऽनुसंधेय इत्यर्थः । एवं भारहेतुमुक्त्वा अभारहेतुं तुरीययाऽऽह ॥ यस्तद् वेद यत आबभूव सन्धां च यां संदधे ब्रह्मणैषः । रमते तस्मिन्नुत जीर्णे शयाने नैनं जहात्यहःसु पूर्व्येष्विति ॥ यत आबभूव, यां च सन्धां प्रतिज्ञां ब्रह्मणा सह संदधे कृतवान् । यस्तद्वेद जानाति तस्मिन् पुरुषे जीर्णे जरति शयाने स्वपिति रमते तेनैव क्रीडति । एनं जानन्तं भक्तं पूर्व्येष्वहस्सु पूर्वे भवेषु दिनेषु न जहाति न त्यजति । ज्ञातृत्वात्तेन कार्यचिकीर्षया तादृशमुद्धवं न त्यक्तवान् । तथाच इदम् अभारहेतुत्वनिदर्शनमित्यर्थः । एवं भाराभारहेतुमुक्त्वा आहरणप्र-

कारं वदिष्यन् सर्वस्य तदाज्ञाकर्तृत्वसूचनपूर्वकं तिरोधानप्रकारं वदति पञ्चम्या, स्तौति च ॥ त्वामापो अनु सर्वाश्चरन्ति जानतीः वत्सं पयसा पुनानाः । त्वमग्निं हव्यवाहꣳ समिन्त्से भर्त्ता मातरिश्वा प्रजानामिति ॥ हे भर्त्तः ! त्वदभिप्रायं, समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यतीतिरूपं त्वां वा जानतीः जानत्यः, सर्वा आपः सामुद्र्यः, अनु लक्ष्यीकृत्य चरन्ति तदुक्तं-द्वारिकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् * वर्जयित्वा महाराज श्रीमद्भगवदालयमिति । ज्ञाने दृष्टान्तः । वत्सं पयसा पुनाना इति । स्वीयं वत्सं ज्ञात्वा क्षीरेण पोषयन्त्यो गवादय इवेत्यर्थः । निरुक्ते, अश्वं नत्वा वारवन्तमित्यत्रोपमावाचकपदाभावेऽप्युपमाव्याख्यानाददोषः । तथाच भगवदिच्छाज्ञानेऽभिमानिप्रेरिता जडा अपि यत्र भगवत्कार्यं कुर्वन्ति तत्र चेतनानां किं वक्तव्यमित्यर्थः । त्वम् अग्निम् आवरणरूपं हव्यवाहं मुखरूपं वा समिन्त्से। ञिइन्धी दीप्तौ । संदीपयसि । एतेन तिरोभावप्रकारकथनेन स्वरूपनित्यत्वमुक्तम् । स्तुतिमाह । त्वं प्रजानां भर्त्ता धारकः पोषकश्च । एतेन, त्वं मायया त्रिगुणयात्मनि दुर्विभाव्य इति व्याख्यातम् ॥

तत्र सप्तमी ॥ नमो वामस्तु शृणुतꣳ हवं मे प्राणापानावजिरꣳ संचरन्तौ । ह्वयामि वां ब्रह्मणा तत् क्षमतम् । यो मां द्वेष्टि तं जहितं युवाना इति ॥ हे प्राणापानौ देवौ, वां युवाभ्यां नमोऽस्तु मे मम हवमाह्वानं शृणुतम् । अजिरं रणाजिरं सञ्चरन्तौ विचरतौ, वां युवां ब्रह्मणा मन्त्रेण ह्वयामि तत्तूर्णं शीघ्रम् एतं मद्गृहे आगच्छतम् । प्रयोजनमाह । युवाना नित्यतरुणौ युवां । यः शत्रुः मां द्वेष्टि तं जहितं विनाशयतम् । तथा युवां विना न मे शत्रुनिवृत्तिरतो यथाऽस्मद्विज्ञापनेन भूशत्रवो भूमिष्ठभक्तशत्रवश्च हतास्तथाऽस्मद्गृह आगत्य तत्राप्यस्मद्बाधकान्निवर्तयतमित्यर्थः ॥ अथाष्टमी ॥ प्राणापानौ संविदानौ जहितम् । अमुष्यामुना मा संगसाथाम् । तं मे देवा ब्रह्मणा संविदानौ विधाय दत्तं तमहꣳ हनामीति ॥ हे प्राणापानौ देवौ, संविदानौ ऐकमत्यं प्राप्तौ, जहितम् अस्मच्छत्रुं परित्यजतम् । अमुष्य मच्छत्रोरसुना प्राणेन मा संगसाथां संगतौ मा भूताम् । एवं ब्रह्मणा मदीयविज्ञापनमन्त्रेण संविदानावैकमत्यं प्राप्तौ युवां, तं शत्रुं, मह्यं वधाय दत्तं प्रयच्छतम् । शत्रुमहं हनामि । नाशयामि । तथाच हनने अम

इति मदधीनतां तस्य संपादयतम्। पश्चान्मयैव सन्निवर्त्तनीय इत्यर्थः। असुराणामपि भगवद्वीर्यरूपत्वात्तद्धनने भगवतः कोपो भवेदिति तदभावाय तस्य द्वेष्टृत्वकथनपूर्वकं सांप्रतलीलया तदनुकूलताज्ञापनपूर्वकमेवं प्रार्थनम् ।
एवं स्तुत्वा सांप्रतिकलीलायां भारभूतस्य स्वरूपं नवम्याह ॥ असज्जजान सत आबभूव यं यं जजान सुगोपो अस्य । यद्वा भारं तन्द्रयते स भर्त्तु परास्य भारं पुनरस्तमेतीति ॥ सतो यादवकुलाद्भगवतो वा असन्मायिकं जजान उत्पन्नम् तत्रगमकम्–आबभूव । ईषद् बभूव ! इत्थं, सृजस्यवसि लुम्पसि तद्गुणस्थ इत्यादिदेवस्तुतेरर्थ उक्तः । किञ्च । मातरिश्वा त्वमेव प्राणो वायुश्च । तेनानस्तमितत्वबोधनात्, शुद्धिर्नृणां न तु तथेह दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः इत्यत्रोक्तं भगवद्यशसश्च श्रद्धया शोधकत्वमुक्तम् । अपहतपाप्मत्वात् । तेन वक्ष्यमाणयुद्धाऽऽदिकं त्वादिच्छयैव, न तु कर्मविपाकरूपमिति बोधितम् । अथ षष्ठ्या स्तुवन् भारहरणाय युद्धमाह ॥ त्वं यज्ञस्त्वमुमेवासि सोमः । तदेवाहवमायन्ति सर्वे । त्वमेकोऽसि बहूननुप्रविष्टो नमस्ते अस्तु सुहवो म एधीति ॥ त्वं यज्ञप्रवर्त्तकत्वेन यज्ञोऽसि । एतदेव देवस्तुतावुक्तम् । यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वेत्यनेन । वाशिष्ठो हसात्प्रहव्य इत्युपाख्याने त्वय्येव यज्ञप्रतिष्ठायाः श्रावणात् । किञ्च त्वमेव सोमोऽसि । उमया संहारकशक्त्या सहवर्त्तमानः सोमस्त्वमेवासि । एतदेव देवस्तुतौ, नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः * कालस्य ते प्रकृतिपूरुषयोः परस्येत्यनेनोक्तम् । युद्धादिकमाह । हे देव, सर्वे यदुष्ववतीर्णास्तवाहवं संग्राममायान्त्यागच्छन्ति । तत्र हेतुः– त्वमेको बहूँस्ताननुप्रविष्टोऽसीति । युद्धं त्वदिच्छयैव, न तु कर्मविपाकेनेत्यर्थः । तदुक्तं– जघ्नुर्मुकुन्देन विमोहिता भृशमिति । एवं लीलामुक्त्वा नमन् प्रार्थयते । ते नमोऽस्तु । मे मम सुहव एधि । सुष्ठु समीचीनं हवमाह्वानं यस्य तादृशो भव । आह्वातुं सुलभो भवेत्यर्थः । तत्रापि, नताः स्म ते नाथ पदारविन्दमिति प्रागेवोक्त्वा ततः, स्वधाम परमं विशस्व यदि मन्यसे इति प्रार्थितम् । एवं केवलं भगवन्तं स्तुत्वा द्वाभ्यां रामकृष्णौ स्तौति । असुरवधाय द्विरूपेणावतीर्णत्वादीषद्बभूव नश्वरं ब-

भुवेति। मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति संध्याधिकरणसिद्धान्तसूत्रे तदुक्तम्। अत्रापि, प्रत्यनीकं मन्यमाना बलभद्रं च मोहिता इति कथनात्तद्द्वष्ट्यादिषु यद्भास्तत् तथैव। अत्रैवं बोध्यम्। भगवान् यदा तिरोधित्सति। तदा मायां विस्तारयति। तस्याश्च षट्स्थानानि। निमित्तदेशकालद्रव्यकर्तृमन्त्रक्रियाः। तेषु प्रकृते मैरेयद्रव्ययुक्तिक्रियाभ्यामाश्रयाभ्यां तामुत्थाप्य अनित्यलीलामध्यपातिशस्त्राहतिद्वारा विषयतारूपास्ते प्रत्युत्पादिताः। ततो व्यामुग्धनित्यलीलामध्यपातिशस्त्राहतिद्वारा विषयतारूपास्तेनाशितास्तेनेतरेषां लीलास्थेष्वेव विरुद्धबुद्धिरुत्पादितेति। तदेतदुक्तं, यं यं जजान स उ गोपो अस्येति। गीर्वाणी आज्ञात्मिका। तद्रक्षक एव स यं यमुत्पादितवान्। तथाच तस्मिन् पूर्वसारूप्यात्तद्विपर्ययणी हत इति बुद्धिरिति तत्स्वरूपमुक्तम्। उक्तां लीलामुपसंहरति। यदा भारमित्यादि। अर्थस्तु व्याख्यात एव। लीलामुपसंहृत्य मध्ये प्राणरूपत्वं यदुक्तं तत्रोपपत्तिं दशम्याऽऽह॥ तत्र त्वं प्राणो भवः महान् भोगः प्रजापतेः। भुजः करिष्यमाणः यद्देवान् प्राणयो नवेति। यत् यदा त्वं भुजः भोगान् करिष्यमाणः सन् नव देवान् नवगोलकवर्तिदेवान् प्राणयः प्रकर्षेण व्याप्तवानसि तत् तेन देव त्वं प्राणः प्राणनामा अभवः। कीदृशो भोगो यदर्थमेतावत्करणं तत्राह। प्रजापतेः उत्पत्त्यानन्दिनः सकाशान्महान् अधिको ब्रह्मानन्दात्मेत्यर्थः। तथाच तदर्थमेतावत् करणम्। प्राणत्वेनापानताप्युक्तैवोपलक्षणतयेति शुभम्॥ प्रकृतमनुसरामः॥

ननु यद्येवं तदा सर्वेषामेवायमर्थः कुतो न भवतीत्यत आहुः॥ श्रुत्युक्तेत्यादिद्वयम्॥ तर्हि प्रयासोऽयं किमर्थ इत्यत आहुः॥ तत्सङ्गादित्यादि॥ एतस्याः पाक्षिकसाधनत्वं निराकुर्वन्ति॥ काञ्चनीत्यादि॥

अत्र जगन्मिथ्यावादी पुनराशङ्कते।

नन्वस्तु प्रपञ्चान्तीतत्वेन लीलानां सत्यत्वं प्रमाणसिद्धत्वाद्, न तु प्रपञ्चस्यापि प्रमाणैस्तथाऽसिद्धत्वादिति चेत् तस्यापि सर्गादिलीलामध्यपातित्वेन श्रीभागवतादिषु निरूपणात्। जगदप्रतीतिप्रसङ्गादित्यादिनिरूपणेनैव प्रपञ्चसत्यत्वस्यापि निरूपित-

भुवेति। मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादिति संध्याधिकरणसिद्धान्तसूत्रे तदुक्तम्। अत्रापि, प्रत्यनीकं मन्यमाना बलभद्रं च मोहिता इति कथनात्तद्दृष्टयादिषु यद्भासत् तथैव। अत्रैवं बोध्यम्। भगवान् यदा तिरोधित्सति। तदा मायां विस्तारयति। तस्याश्च षट्स्थानानि। निमित्तदेशकालद्रव्यकर्तृमन्त्रक्रियाः। तेषु प्रकृते मैरेयद्रव्यमुक्तिक्रियाभ्यामाश्रयाभ्यां तामुत्थाप्य अनित्यलीलामध्यपातिशस्त्राहतिद्वारा विषयतारूपास्ते प्रत्युत्पादिताः। ततो व्यामुग्धनित्यलीलामध्यपातिशस्त्राहतिद्वारा विषयतारूपास्तेनाशितास्तेनेतरेषां लीलास्थेष्वेव विरुद्धबुद्धिरुत्पादितेति। तदेतदुक्तं, यं यं जजान स उ गोपो अस्येति। गीर्वाणी आज्ञात्मिका। तद्रक्षक एव स यं यमुत्पादितवान्। तथाच तस्मिन् पूर्वसारूप्यात्तद्विपर्यायणी हत इति बुद्धिरिति तत्स्वरूपमुक्तम्। उक्तां लीलामुपसंहरति। यदा भारमित्यादि। अर्थस्तु व्याख्यात एव। लीलामुपसंहृत्य मध्ये प्राणरूपत्वं यदुक्तं तत्रोपपत्तिं दशम्याऽऽह॥ तन्न त्वं प्राणो भवः महान् भोगः प्रजापतेः। भुजः करिष्यमाणः यद्देवान् प्राणयो नवेति। यत् यदा त्वं भुजः भोगान् करिष्यमाणः सन् नव देवान् नवगोलकवर्तिदेवान् प्राणयः प्रकर्षेण व्याप्तवानसि तत् तेन देव त्वं प्राणः प्राणनामा अभवः। कीदृशो भोगो यदर्थमेतावत्करणं तत्राह। प्रजापतेः उत्पत्त्यानन्दिनः सकाशान्महान् अधिको ब्रह्मानन्दात्मेत्यर्थः। तथाच तदर्थमेतावत् करणम्। प्राणत्वेनापानताप्युक्तैवोपलक्षणतयेति शुभम्॥ प्रकृतमनुसरामः॥

ननु यद्येवं तदा सर्वेषामेवायमर्थः कुतो न भवतीत्यत आहुः॥ श्रुत्युक्तेत्यादिद्वयम्॥ तर्हि प्रयासोऽयं किमर्थं इत्यत आहुः॥ तत्सङ्गादित्यादि॥ एतस्याः पाक्षिकसाधनत्वं निराकुर्वन्ति॥ काञ्चनीत्यादि॥

अत्र जगन्मिथ्यावादी पुनराशङ्कते।

नन्वस्तु प्रपञ्चाप्रतीतत्वेन लीलानां सत्यत्वं प्रमाणसिद्धत्वाद्, न तु प्रपञ्चस्यापि प्रमाणैस्तथाऽसिद्धत्वादिति चेत् तस्यापि सर्गादिलीलामध्यपातित्वेन श्रीभागवतादिषु निरूपणात्। जगदप्रतीतिप्रसङ्गादिसादिनिरूपणेनैव प्रपञ्चसत्यत्वस्यापि निरूपित-

स्कन्धवाक्याच्च । एवम् अस्तीति प्रतीतिरपि प्रादुर्भावप्रयुक्तेति वि-
षयाणां ब्रह्मात्मकत्वेन न विवादार्हा । विपरिणमते वर्धते क्षीयते
इति प्रतीतित्रयी तु पूर्वरूपतिरोभावरूपान्तराविर्भावाविवेकजन्य-
त्वादविविक्ततद्द्वयविषया । वृद्धिक्षयविपरिणामेषु विचारितेषु त-
थैव सिद्धेः । नश्यत इति तु केवलतिरोभावविषया । धात्वर्थस्याद-
र्शनात्मकत्वात् । उक्तप्रमाणेभ्यश्च । तथा सत्याविर्भावतिरोभावयुक्ते
ब्रह्मस्वरूप एव प्रपञ्चे भगवता मायया अविद्यमानं प्रत्याय्यते विद्यमानं
न प्रत्याय्यते इति जीवस्य भ्रमः संसारश्च भवति । अविद्यमानं यत्प्रमाणं
यत् प्रत्याय्यते तदन्तरासृष्टिरूपत्वान्मायामनोमयम् । तेनानुमानादपि
प्रपञ्चसत्यत्वं सिद्ध्यति । तत्रायं प्रयोगः । व्यावहारिकः प्रपञ्चः स्वा
पेक्षयोत्कृष्टसत्त्वाकप्रपञ्चपूर्वकः । मायिकत्वेनाभिमतत्वाद्, मायिक-
त्वाद्वा । स्वाप्नादिप्रपञ्चवदिति । इदं यथा तथा सृष्टिभेदवादे प्रप-
ञ्चितमस्माभिरिति नात्र प्रपञ्च्यते । नन्वस्तु प्रपञ्चस्य भिन्नाभि-
न्नत्वं, तथापि नृसिंहोत्तरतापनीयषष्ठखण्डे स्वप्रकाशमानन्दघनं शू-
न्यमभवदिति । परमं ब्रह्मात्मप्रकाशं शून्यं जानन्त इति च श्राव-
णात् । गौडाचार्यकृते तद्विवरणे च विशेषशून्यमिति व्याख्याना-
त् । ब्रह्म निर्विशेषमेव प्रतिपत्तव्यम् । तथा सति लीलाऽसत्त्वम् ।
किञ्च तत्रैव नवमखण्डे, न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीय इ-
त्युपक्रम्य मायया ह्यन्यदिवेत्युक्त्वा, माया च तमोरूपाऽनुभूतेरिति
तत्स्वरूपं चोक्त्वा, तदेतज्जडं मोहात्मकमनन्तं तुच्छमिदं रूपमस्य
व्यञ्जिकेत्याद्युक्तम् । तेन जगतोऽपि तुच्छत्वं मायिकत्वमिति कथं
ब्रह्मात्मत्वं तत्र निर्णेतुं शक्यमित्याशङ्कायामाहुः ॥ किञ्चेत्यादि ॥ एते
श्रुतिपुराणवाक्ये मध्वभाष्ये प्रथमाध्यायसमाप्तावुपन्यस्ते । तदर्थ-
श्च जयतीर्थेन टीकायां व्याख्यातः । दुर्जनानामव्यक्तत्वादिना शमूनं
कुरुते इत्यादि । योगेन चेश्वरे निषेधमुखप्रवृत्तवस्तुवाचिशब्दप्र-
वृ...रुपपत्तेरुपपत्तिः । तत्र शमूनं कुरुते स्वसुखादन्यसुखमल्पं करो-
ति । तोदनात्तुच्छः । अदृश्यः छः छन्नत्वात् । भावयितुमुत्पादयितुं
नाश्यत्वादलक्ष्यत्वादिति । एवं सति तापनीये आनन्दघनपदोत्तरं
शून्यपदोक्त्याऽन्यसुखाल्पीकर्तृत्वमेवाऽर्थो, न तु यावद्विशेषशून्यत्व-
म् । तथा सति लीलानित्यत्वं निर्बाधम् । लीलाभिरेवान्यसुखा-
ऽल्पीकरणात् । तथा परमात्मैव मायया छन्नः सन् तुदतीति तत्प्रयु-

त्कं तुच्छत्वं, न तु मायाकृतम् । तृतीयया करणतयैवाभिप्रेतत्वात् । अत एव व्यञ्जकत्वमेव श्रावितं, न तु जनकत्वम् । तथा, अन्यदिवेत्युक्तं, न त्वन्यदेवेति । एवं सत्यभावप्रयोजकतया ब्रह्मण्यभावरूपतायाा अपि सत्त्वात् प्रपञ्चस्य भावाभावरूपत्वं न ब्रह्मात्मकत्वबाधकमित्यर्थः । एवं प्रमाणपुरःसरं शृण्वन्तोऽपि ये न मोहं जहति तेषामाशयमाहुः ॥ येषामित्यादि ॥ तथात्वमिति ॥ असहिष्णुत्वम् ॥

तस्मादस्माभिरेवोक्तपद्धत्या श्रुतिसिद्धया ॥
ज्ञात्वा ब्रह्मस्वरूपं तत्प्राप्त्यै तद्भजताऽखिलाः ॥ १ ॥

येषां लौकिकमेव मानमधिकं वेदादितोऽलौकिकाव्
तत्पादानुगतस्तदर्थ इति च प्रच्छन्नबौद्धास्तु ते ॥
येषां तद्विपरीततैव विदुषां केषां चिदन्तर्गता
तेषामेव मुदेऽस्तु मत्कृतिरियं गोपीशसंसेविनाम् ॥ २ ॥

वरीवर्ति श्रद्धा श्रुतिषु यदि वा व्यासवचने
तदा विद्वांसोऽस्मद्विरचितमिदं मण्डनवरम् ॥
यथोक्तं कण्ठे वा शुकवदथवाऽर्थं च हृदये
मुदा कृत्वाऽऽयत्तं धुनुत रिपुपक्षाभिधतमः ॥ ३ ॥

यदागतं हृदि श्रीमद्गोपीशरतिलक्षणम् ।
शोभां तनोति तदिदं मण्डनं श्रीहरेः प्रियम् ॥ ४ ॥

अखण्डवरपण्डितप्रसृतचण्डपाखण्डवा-
ग्विखण्डनसुचण्डिमा धरणिमण्डलाखण्डलः ॥
नमन्नृपतिमण्डलीमुकुटताण्डवैर्मण्डितः
सपादनखमण्डलः पितुरिहाऽस्तु मे मण्डनम् ॥ ५ ॥

पुनरपि नमामि गोपीपतिरतिमार्गप्रवर्तकाचार्यान् ॥
श्रीवल्लभाऽभिधानान् पितृचरणान् वाङ्मनःकायैः ॥ ६ ॥

एतेनास्मत्कुलपतिः श्रीगोपीजनवल्लभः ॥
प्रीतोऽस्त्वस्मासु तेनैव पूर्णता किमिहापरैः ॥ ७ ॥

इति श्रीमन्निजकटाक्षपाततरणिविघटितमायावादिप्रभृति-
वादितमःपुञ्ज—विकासितश्रीगोकुलाधीशरतिसरसिज—
श्रीगोकुलनाथचरणैकतानगोस्वामि—
श्रीविठ्ठलनाथदीक्षितविरचितं
विद्वन्मण्डनं सम्पूर्णम् ॥

सिद्धमाहुः ॥ तस्मादित्यादि ॥ १ ॥ पूर्वोक्ताऽसहिष्णूनां स्वरूपमाहुः ॥ येषां लौकिकेति ॥ इति चेति ॥ अधिकपदमावृत्त्या अत्रापि योज्यम् । प्रच्छन्नबौद्धा इति ॥ प्रच्छन्नासुराः । द्वितीयस्कन्धे । देवद्विषां निगमवर्त्मनि धिष्ठितानां पूर्त्तिर्मयेन विहिताभिरदृश्यमूर्त्तिः * लोकान् घ्नतामतिविमोहयति प्रलोभं वेषं विधाय बहुभाष्यत औपधर्म्यमित्यत्रासुराणामेवार्थे भगवता बौद्धानां प्रस्थानं कृतमिति कथनाद् दृष्टसृष्टिवादस्य तन्मत एव सत्त्वात्तदुपगच्छतां तथात्वमेवेत्यर्थः। तथाचोक्तं वैष्णवे कलिनिरूपणे— विप्ररूपाणि रक्षांसि राजानः कर्णवेदिन इति । पाद्मोत्तरखण्डे च शिववाक्यम् । मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते * मयैव कथितं देवि कलौ ब्राह्मणरूपिणेति ॥ २ ॥

ग्रन्थस्यावान्तरमुख्यफले आहुर्द्वाभ्यां क्रमेण ॥ वरीवर्त्तीत्यादि ॥३॥४॥

उक्तफलद्वयं श्रीमदाचार्यचरणस्वरूपवाक्यादेव भवतीति बोधयितुं प्रार्थनपूर्वकं नमन्ति द्वाभ्याम्, अखण्डेत्यादिभ्याम् ॥ मण्डलपदं त्रिलिङ्गम् । बिम्बोऽस्त्री मण्डलं त्रिष्वित्यमरः ॥ ५ ॥ ६ ॥ ग्रन्थं समाप्यैतं भगवते समर्पयन्ति ॥ एतेनेति॥ उपायनभूतेनग्रन्थेनेत्यर्थः ॥ ७ ॥

स्निग्धोज्ज्वलं रसघनं हृदयं स्वकीयं
वक्तुं निजेषु नवनीतमयं दधानः ॥
प्रेङ्खश्रितश्च तरले जनमानसेऽपि
ह्यास्ते दयालुरिति तस्य गुणं व्यनक्ति ॥ १ ॥

यस्तं नमामि नवनीरधराभिरामं श्रीबालकृष्णमखिलश्रुतिसारमीशम् ॥
मादृक्प्रपन्नजनकर्ममयोरुपाशविच्छेदचञ्चलमहासिमनामधेयम् ॥ २ ॥

नमामि श्रीमदाचार्याननल्पकरुणाकरान् ॥
संसारकूपपतितोद्धारप्रकटितस्वकान् ॥ ३ ॥

नमः श्रीविठ्ठलेशाय संसारार्णवसेतवे ॥
श्रीमदग्निकुमाराय भजनानन्दहेतवे ॥ ४ ॥

श्रीमद्वल्लभनन्दनप्रभुकृपादृष्ट्या समासादितज्ञानादिः
प्रणिधाय तच्चरणयोश्चित्तं तदिच्छाबलात् ॥
विद्वन्मण्डनधारणे सुकरतासिद्ध्यै यथाबुद्ध्ययं
तद्दासः पुरुषोत्तमो ऽयरचयत् सौवर्णसूत्रं मुदा ॥ ५ ॥

एष पुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे ॥
निवेदितस्तेन नाथा तुष्यन्तु मयि किङ्करे ॥ ६ ॥

इति श्रीमद्वल्लभनन्दनरजस्सनाथश्रीपीताम्बरात्मज
श्रीपुरुषोत्तमप्रणीतं विद्वन्मण्डनविवरणं
पूर्णतामाप ॥